to devote a part of his precious time, who, fitly considering our devotion, acceded to our request and wrote out the present commentary which is so easy to comprehend that even mere beginners, having a faint knowledge of the Sanskrit Literature, can understand it.

As soon as the shrutees become clear to the immaginative faculty of man they are easily impressed upon his mind and can be retained there with a little practice and a constant revision of the text.

Ambica Charan Bandopadhya
of Ágarpara.
District 24 Pergannahs.



# भूमिका ।

---

मुक्ति जबही प्राप्त होती है जब यह जीव आवागवन के बन्धनों से छूट जाता है इसके प्राप्त करने का केवल एकही उपाय है कि मनुष्य बेदांत शास्त्रों के उद्देशों को सर्वदा दृढ़ रूप से मनन करता रहै ।

यह बेदांतशास्त्र रूपी सीसमहल उपनिषद् रूपी खम्भों पर स्थित है ।

SWAMI BHASKARA NAND SARASWATI
THE FAMOUS ASCETIC OF BENARES.
श्रीमान् स्वामी भास्करानन्दजी सरस्वती काशी ।



SWAMI BHASKARA NAND SARASWATI
THE FAMOUS ASCETIC OF BENARES.
श्रीमान् स्वामी भास्करानन्दजी सरस्वती काशी ।

# ईशोपनिषत् ।

श्रीगणेशाय नमः ।

यो देवः सकलो ऽकलो ऽथ विमलो दृश्यं विमृश्यं परं पश्यन्नात्मनिभात्मनि प्रतिपलं नैकात्मता-निश्चयी। नानानिश्चयिनं समस्तजयिनं विश्वेश्वरं स्वेश्वरं तं स्वं स्वेन सदा प्रमोदिचकितश्चिन्तामि चित्तालयम् ॥ १ ॥

सर्वे श्वासभृतं भजन्ति भविकं प्रश्वासशून्यं शवं प्रश्वा-

सानुषवप्रसेवनवशात्तिसध्यन्ति सत्सिद्धयः । स्वान्तं श्वासमयं सितासितसृतिः सिद्धेशनिश्वासतो विश्वासे ऽखिलकार्यसिद्धिरिह तद्वेदैकनिष्ठा शुभा ॥ यथा ऽल्पबुद्धिगोऽपिस्याद्वेदान्तविमलाशयः । तथाशयो ऽभयोदैवाद्भास्करानन्दमस्करी॥

अथ वाजसनेयसंहितोपनिषदि—

प्रथममात्मज्ञाने समर्थानधिकारिण उद्दिश्योपदिशति श्रुतिः ।

ईशा वास्यमिद६ं सर्वं यत्किं च जगत्यां जगत्। तेन त्यक्तेन

भुञ्जीथा मा गृधः कस्य स्वि-
द्धनम् ॥ १ ॥

जगत्याम् लोके यत्किंच जगत् गच्छति प्राप्नोति अस्ति इदं सर्वम् ईशा ईश्वरेण अंतर्याम्यात्मना वास्यम् आच्छादयनीयम् ईश एवेदंसर्वमिति भावनया तिरोभावनीयम् तत्तद्बुद्धिस्त्याज्येति भावः । कथमेवंसति व्यवहारोऽत आह आत्मनोऽन्यात्मना त्यक्तेन तेन जगता भुंजीथाः व्यवहारं पालयेथाः स्वाप्नकूटकार्षापणादिना ऽपि व्यवहारप्रसिद्धेः । एवमपि कस्य स्वित् कस्यापि धनम् मा गृधीः मा काङ्क्षीः । व्यवहारासिद्धिमात्रे तत्तद्बुद्धिर्न तु रागाभिनिवेशौ जगति कार्याविति भावः ॥ १ ॥

आत्मबोधा—समर्थान्प्रत्याह ।

कुर्वन्नेवेह कर्म्माणि जिजी-

विषेच्छतꣳ समाः । एवंत्वयि नान्यथेतोऽस्ति न कर्म्म लिप्यते नरे ॥ २ ॥

अज्ञः इह संसारे विहितानि कर्माणि निष्कामतया कुर्वन्नेव शतं समाः शतवर्षाणि यावज्जीवमिति भावः । जिजीविषेत् जीवितुमिच्छेत् एवम् उक्तप्रकारेण नरे त्वयि कृतमपि कर्म न लिप्यते सम्बन्धं न प्राप्स्यति । इतः अस्मात् प्रकारात् अन्यथा प्रकारान्तरम् नास्ति कर्मालेपे ॥ २ ॥

सकामात्यन्ताज्ञान्प्रत्याह ।

असुर्य्या नाम ते लोकाअन्धेन तमसाऽऽवृताः । तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥ ३ ॥

असुर्याः तमो-गुणप्रधानानाम् असुराणाम् इमे योग्याः । नाम ते प्रसिद्धाः । अन्धेन गाढ़ेन तमसा अज्ञानेन आवृताः । लोकाः लोकस्थतत्तद्योनयः तान् लोकान् ते जनाः प्रेत्य मृत्वा अभिगच्छन्ति के ते ये के च ये के ऽपि आत्महनः अनन्तबारप्राणबियोगाऽनुकूलशुभाशुभकर्म कर्तृत्वेन मम मृतिरिति निश्चयस्यापरित्यागेन च आत्मघातिनः ॥ ३ ॥

यमात्मानं घ्नन्तीवाज्ञानात्तस्यस्वरूपमाह ।

**अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन् पूर्वमर्षत्। तद्धावतो ऽन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति ॥**

अनेजत् अचलम् अतः एकम् सदैकरसम् वस्तुत एवमप्यन्तः-करणोपाधिव-

शात् सर्वाधिकवेगित्वेन प्रसिद्धात् मनसः जवीयः अधिकवेगवत् यत्र कुत्रापि गच्छेदेव संकल्पात्मकं मनो भासकात्मना ऽग्रतो गृह्यते यतो ऽत इति भावः । यतो मनसः पूर्वम् प्रथमम् अर्षत् अगच्छत् अतः देवाः इन्द्रियाणि एनत् आत्मस्वरूपम् नाप्नुवन् न प्राप्नुवन् उक्तमेव वदति वैशद्याय तिष्ठत् न गच्छत् सत् तत् आत्मतत्त्वम् धावतः अन्यान् मन-आदीन् अत्येति उल्लङ्घ्याग्रे गच्छति मनआदि प्रवृत्तिरपिचिदाभाससत्तयैवेत्याह मातरिश्वा वायुः प्राणः तस्मिन् आत्मतत्त्वे सत्येव अपः स्वचेष्टाहेतुजलानि दधाति गृह्णाति अद्भिर्विना ग्लायमानाः प्राणाः प्राणचेष्टा च मनआदिचेष्टाहेतुरिति भावः ॥ ४ ॥

वास्तवैकरस्ये ऽपि वैचित्र्यभानमौपाधिकं प्रकारान्तरेण वदति ।

**तदेजति तन्नैजति तद्दूरे तद्व-**

दन्तिके । तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः ॥ ५ ॥

तदात्मस्वरूपम् एजति चलति न चलति जगच्चित्तानां दूरे तद्वत् तथा आत्मचित्तानाम् अन्तिके समीपे स्वरूपभूतः । अस्य सर्वस्य जगतः अन्तः मध्ये उ वितर्के बाह्यतः बहिर्देशे व्यापित्वादिति भावः ॥

आत्मस्वरूपनिरूपणफलमाह ।

यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति । सर्वभूतेषु चात्मानं ततो न विजुगुप्सते ॥

यस्तु तत्त्वजिज्ञासुः सर्वभूतानि उक्तविधात्मन्येव पश्यति नात्मनो ऽन्यत्वेनान्यत्र आत्मानं च सर्वभूतेषु पश्यति न तु प्रतिभूतं भिन्नं भिन्नमितिभावः । ततः तस्माज्जिज्ञा-

सोऽऽत्मानमात्मा न विजुगुप्सते न गुप्तं करोति तस्य द्वेष्यो भवतीतिभावः ॥ ६ ॥

तत्त्वज्ञं प्रति फलमाह ।

**यस्मिन्सर्वाणि भूतान्यात्मैवाभूद् विजानतः । तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥ ७ ॥**

विजानतः विशेषतो संशयमात्मतत्त्वज्ञस्य यस्मिन् ज्ञानोत्तरकाले सर्वभूतान्यात्मस्वरूपमेवाभूत् अतः एकत्वमनुपश्यतः आत्मातिरिक्तप्रभावयतः । तस्य तत्र तस्मिन्काले मोहः कः शोकः कः न कोपि द्वैतवासनाऽभावे तन्मूलमोहाद्यनुसन्धानमेव न तदेतिभावः ॥ ७ ॥

कदाचित्कबोधान्तरमाह तत्त्वज्ञस्य—

**सपर्य्यगाच्छुक्रमकायमव्रण-**

मस्नाविरꣳशुद्धमपापविद्धम् ।
कविर्मनीषी परिभूः स्वयम्भू-
र्याथातथ्यतोऽर्थान्व्यदधाच्छा-
श्वतीभ्यः समाभ्यः ॥ ८ ॥

स तत्त्वज्ञः पर्यगात् सर्वमगमत् किं पर्यगादिति विशेषजिज्ञासायां प्रथमं निर्विशेषतत्वमाह शुक्रम् सारभूतं प्रकाशरूपं वा अकायम् अशरीरम् अव्रणम् अखण्डम् अस्नाविरम् स्नावा नाड्यस्तच्छून्यम् स्थूलदेहशून्यम् शुद्धम् निर्मलम् अतः अपापविद्धम् पापाद्यनाश्रयम् ब्रह्मेतिभावः । अथवा षडपि क्रियाविशेषणम् पुनः स एव कविः त्रिकालज्ञः मनीषी अन्तर्यामी परिभूः सर्वस्य तिरस्कर्ता सर्वोत्तम इति यावत् स्वयम्भूः अकारणः ईश्वरस्सान्निति यावत् शाश्वतीभ्यः नित्याभ्यो वह्वीभ्यो वा समाभ्यः, बहुभिर्व-

पैरित्यर्थः । याथातथ्यतः यथा स्वरूपम् अर्थान् पदार्थान् व्यदधात् अकरोत् अहमेव तत्तद्रूपेण सर्वमकरवमित्यप्यनुसन्दधाति कदाचित्स इति भावः ॥ ८ ॥

अथ भिन्ने कर्मोपासने निन्दित्वा सहकृते
अपि तेन फलतोज्ञानौत्कर्ष्यं स्पृशत
इति सूचयति त्रिभिः ।

**अन्धंतमः प्रविशन्ति येऽविद्यामुपासते ततो भूय इव ते तमो य उ विद्यायाꣳ रताः॥**

अन्धंतमः गाढाविवेकम् प्रविशन्ति प्राप्नुवन्ति के ये आविद्याम् अविद्याकार्यं कर्मोपासते ततो भूय इव तमः उक्ताधिकमिव तमः ते प्रविशन्ति के ये उ वितर्कें विद्यायाम् उपासने रताः तत्पराः तत्तद्दैवैश्वर्यप्राप्तिरधिकासक्तिहेतुरिति भावः ॥ ९ ॥

विद्याविद्यान्यतररतस्य नोभयफलमिति फलभेदेन सूचयति ।

**अन्यदेवाहुर्विद्ययाऽन्यदाहुरविद्यया । इति शुश्रुम धीराणां येनस्तद्विचचक्षिरे॥१०॥**

विद्याया अन्यदेव देवलोकादिफलम् आचार्या आहुः तथा अविद्यया अन्यत् पितृलोकादिफलम् आहुः इति वचनं वयं शुश्रुम केषाम् धीराणाम् व्याख्यातृणाम् के ते ये नः अस्मभ्यम् तत् विद्याविद्याद्वयम् उक्तफलद्वयं वा विचचक्षिरे कथितवन्तः ॥ १० ॥

उभयरतस्य फलमाह स्तुतये—

**विद्याञ्चाविद्यां च यस्तद्वेदोभय ठं० सह । अविद्यया**

मृत्युं तीर्त्वा विद्ययामृतम-
श्नुते ॥ ११ ॥

यः तत् उभयम् सह वेद मिलितं क-
रोति किं तत् विद्यां च अविद्यां च कर्मानु-
ष्ठानं च केवलं स्वधर्मबुद्ध्या विद्याप्रतिवन्ध-
कदुरितशामकबुद्ध्यावेति भावः सः अविद्य-
या तुच्छैहिकपुत्रवित्ताद्यकामनानुष्ठितकर्मणा
मृत्युं तीर्त्वा ऐहिकाल्पकालिकं पुनः पुन-
र्भावि मृत्युमप्राप्य उपासनयाऽमरत्वं प्रा-
प्नोति ॥ ११ ॥

कार्यकारणोपासने ऽपि न ज्ञानसमकक्षे इति
सूचनार्यैव पुनः पूर्ववन्मन्त्रत्रयमाह ।

अन्धन्तमः प्रविशन्ति ये-
ऽसम्भूतिमुपासते । ततो भूय
इव ते तमो य उ सम्भूत्या
ठं० रताः ॥ १२ ॥

असम्भूतिः अजा प्रकृतिः । सम्भूतिः उत्पत्तिः तदाश्रयकार्यं हिरण्यगर्भ इति यावत् शेषार्थो नवममन्त्रवत् प्रकृतिरविवेकादेर्जननी हिरण्यगर्भश्च तद्वान् फलं चोपास्य स्वभावसदृशमेवेति भावः ॥ १२ ॥

एकमेव फलमेकोपासकस्येति फलभेदेन सूचयति ।

अन्यदेवाहुस्सम्भवादन्यदाहुरसम्भवात् । इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥

अन्यत् अणिमाद्यैश्वर्यम् अन्यत् प्रकृतिरूपत्वम् शेषं दशममन्त्रवत् ॥ १३ ॥

सहकरणमुपासनयोः फलप्रदर्शनेन स्तौति ।

सम्भूतिञ्च विनाशं च यस्तद्वेदोभय ठं० सह विनाशेन

मृत्युं तीर्त्वा सम्भूत्यामृतम-
श्नुते ॥ १४ ॥

विनाशम् सर्वकार्यविनाशाश्रयः कारणं प्रकृतिरिति यावत् तदुपासनं च पितुः पुत्रेणेव सर्वैः कार्यमिति स्वधर्मबुद्ध्या अमृतम् अणिमादिना सुखम् देवत्वाप्त्या अमरत्वं वा शेषमेकादशममन्त्रवत् यद्यप्येवं क्रमतः कैवल्यमपि भवति तथापि तत्रैव रागाद्याधिक्यसम्भवे ततश्च्युतिरपि पुनः सम्भवतीति न ज्ञानोदयतुल्यतान्यत्रेति भावः ॥

देवयानेन यथा गच्छन्नुपासकः सूर्यमण्डलं प्राप्य प्रार्थयते तदाह ।

हिरण्मयेन पात्रेण सत्य-
स्यापिहितं मुखम् । तत्त्वं पू-
षन्नपावृणु सत्यधर्माय दृष्टये॥

हिरण्मयेन—हेमवत्प्रकाशमयेन पात्रेण पात्राकारेण तव मण्डलेनेति यावत् सत्यस्वरूपोपास्य देवस्य मुखम् तत्प्राप्तिमार्गद्वारम् अपिहितम् आच्छादितम् अतः हे पूषन्! सूर्य! तत् आच्छादनम् तेजस्समूहात्मकम् त्वमपावृणु पृथक्कुरु कस्मै सत्यधर्माय सत्यधर्मा उपास्यदेवः तं प्राप्तुं या दृष्टिर्दर्शनं तस्य तस्मै गन्तुमितिभावः । क्वचिदुपासने तु मुखमितिप्राधान्यान्निर्देशः स्वरूपमित्यर्थः ॥ १५ ॥

क्वचिदुपासने रतस्य प्रार्थनामाह ।

**पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन्समूह तेजो यत्ते रूपं कल्याणतमं तत्ते पश्यामि योऽसावसौ पुरुषः सोहमस्मि ॥ १६ ॥**

हे पूषन् पोषक हे एकर्षे प्रधानऋषे हे यम नियामक हे सूर्य प्रेरक हे प्राजापत्य प्रजापत्यापत्य रश्मीन् किरणान् व्यूह पृथक्कुरु समूह संकोचय तेजः ज्योतिस्वरूपम् कल्याणतमम् अतिसुन्दरमतिशुभदं वा यत्ते रूपं तत्ते रूपमहं पश्यामि द्रक्ष्यामि स्वोपासनां प्रकटयति यः असौ तव मण्डलस्थः पुरुषः स असौ अहमस्मि ॥ १६ ॥

अथ सामान्तः प्रार्थनान्तरामाह ।

वायुरनिलममृतमथेदं भस्मान्त ठं० शरीरम् )( क्रतोस्मरकृत ठं० स्मरक्रतोस्मरकृत ठं० स्मर ॥ १७ ॥

मम वायुः प्राणः । अमृतमनिलम् मरणरहितपरिपूर्णवायुम् गतः स्थूलदेहात्सूक्ष्मदेहे निर्गत इति भावः अथ अनन्तर-

म् शरीरम् स्थूलदेहः। इदं भस्माऽन्तम् एतद्भस्मस्वरूपम् यातम् इदं भूलोके मृतकरूपस्थूलशरीरमिति वा ओमित्यऽङ्गीकारे स्वीकरोम्येतत् विहितकर्मादौ प्रणवोच्चारणसंस्कारवशाद्वा ओमिति निर्देशः। क्रतुर्यज्ञः उपासने भावनात्मकमनस्संकल्पो वा तथा च हे क्रतो त्वं स्मर किम् मया यत्कृतं तत्स्मर कृतघ्नो माभूः मया सम्पादितोऽसि ततो निरालम्बे मयीदानीमाऽऽशु प्रसीद फलत इति भावः आवृत्तिराऽऽदरार्था स्वदैन्यसूचिका वा ॥ १७ ॥

विहितकर्मनिष्पत्तये निषेवितमऽग्निं प्रार्थयते—

**अग्ने नय सुपथा राये अस्मान्**
**विश्वानि देव वयुनानि विद्वान्**
**युयोध्यऽस्मज्जुहुराणमेनो भू-**
**यिष्ठांते नम उक्तिं विधेम ॥१८॥**

हे अग्ने सुपथा शोभनदेवयानाख्यमार्गेण अस्मान् त्वम् नय कस्मै राये फलाऽऽत्मकधनाय फलोपभोगायेति यावत् यतो हे देव कर्मोपासनविषयाणि विश्वानि सर्वाणि वयुनानि ज्ञानानि अस्माकम् त्वम् विद्वान् वेत्सि किं च जुहुराणम् कौटिल्येच्छायुतम् फलप्राप्तौ प्रतिबन्धकम् अस्माकम् एनः पापम् अस्मत् अस्मत्तो युयोधि अमिश्रितं कुरु पृथक्कुर्विति यावत् ते तुभ्यम् भूयिष्ठाम् वहुतराम् नम उक्तिम् नमस्कारवचनम् विधेम वयम् कुर्म इत्यर्थः ॥ १८ ॥

दयया ऽनन्तरामस्य मृदुर्ग्रन्थोऽयमुम्भितः ।
श्रीस्वामिभास्करानन्दैः काश्यामीशाऽऽख्यवेदके ॥
क्वशामद्धीः क्व भाष्येण क्व वेदान्ताऽब्धिमन्थनम् ।
तथाऽप्यघटितं किं वा गुरुदेवदयालवे ॥ २ ॥

इत्युपनिषत्प्रसादे ईशोपनिषत्—

# श्रीगणेशाय नमः ।

अथ सामवेदे तलवकारशाखा ब्राह्मणे भगवानीश्वरो मुमुक्षुजनोद्दिधीर्षयाऽऽत्मज्ञानं निरूपयिष्यन् तत्सौकर्याय गुरुशिष्यसंवादं कल्पयामास तत्र तावत् प्रश्नवाक्यं शिष्यस्य केनेषितमित्यादि ॥

**केनेषितं पतति प्रेषितं मनः**
**केन प्राणः प्रथमः प्रैति युक्तः ।**
**केनेषितां वाचमिमां वदन्ति**
**चक्षुः श्रोत्रं क उ देवो युनक्ति ॥१॥**

केन प्रेषितम् प्रेरितम् मनः इषितम् इष्टम् विषयम् पतति गच्छति मन आदीनां स्थितेः प्राणाऽधीनत्वात् प्रथमः मुख्यः प्रधानः प्राणः केन युक्तः प्रेरितः प्रैति स-

दाऽऽगच्छति केन इषिताम् प्रेषिताम् इमां वाचम् वदन्ति प्राणिन उ वितर्के को देवः चक्षुः श्रोत्रं च युनक्ति प्रेरयति एतानि चाऽन्तर्बाह्यकरणानि कर्त्रा चैभ्योऽन्येन भाव्यम् न त्वत्राऽसावऽनुभूयत इति भावः ॥ १ ॥

उत्तरमाऽऽह ।

श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचᳩ स उ प्राणस्य प्राणश्चक्षुषश्चक्षुः अतिमुच्य धीराः प्रेत्याऽस्माल्लोकादऽमृता भवन्ति ॥ २ ॥

यत् श्रोत्रस्यापि श्रोत्रम् मनसोऽपि मनः वाचोऽपि वाचम् वाक् प्राणस्याऽपि प्राणः चक्षुषोऽपिचक्षुः ह स्फुटम् जड़श्रोत्राऽऽदीनां शब्दग्रहणाऽऽदिसामर्थ्यकारणमऽत्रसङ्घाते

चेतनमिति उ वितर्के तदेव स प्रसिद्ध आत्मा कर्ता तथा च धीरा विवेकिनः अतिमुच्य अतिशयेनाऽऽत्मानं पृथक् कृत्वा मन आदिभिरऽसम्बद्धं ज्ञात्वेति भावः । अस्माल्लोकात् प्रेत्य प्रकर्षेण गत्वा मृत्वा अमृताः मरणरहिताः मुक्ता भवन्ति ॥ २ ॥

एवमऽपि कुतो न मन आदिभिर्गृह्यतेऽयमिति कुतश्च नोपदिश्यते ईदृश इतीत्याऽऽशङ्कायां सर्वाऽनुभूतिरूपत्वान्न ज्ञेयःग्राह्यः किन्तु सर्वनिषेधाऽवधितया शिष्टं चित्वात्स्वयं प्रकाशत इत्याऽऽह—

न तत्र चक्षुर्गच्छति न वाग् गच्छति नो मनो न विद्मो न विजानीमो यथैतदऽनुशिष्यादऽन्यदेव तद्विदितादऽथो अविदितादऽधि इति शुश्रुम पूर्वेषां ये नस्तद्व्याऽऽचचक्षिरे ॥३॥

तत्र चिदाऽऽत्मनि वाङ्मनश्चक्षूंषि न गच्छन्ति अतो न वयं विद्मः ईदृश इति विशेषतोऽपि न जानीमः यथा येन विशेषणेन एतत् चिदात्म वस्तु कोऽपि कस्मैचित् अनुशिष्यात् उपदिशेत् अनुशिष्यादऽनुशिष्यासमुपदिशेयमिति वा किन्तु तत् चिदात्म वस्तु विदितात् स्थूलसकलकार्यात् अन्यदेव अविदितादऽथो सूक्ष्मत्वादऽज्ञातरूपकारणादऽपि अधि अन्यत इति वचनम् पूर्वेषाम् वयं शुश्रुम के ते ये आचार्याः नः अस्मभ्यम् तत् आत्मवस्तु कथितवन्तः ॥३॥

ननु कार्यकारणाऽऽत्मकजगदऽतिरिक्तं यदुच्यते तद् ब्रह्म नाऽऽत्मेत्याऽऽकाङ्क्षायामाऽऽत्मब्रह्मत्वाय ब्रह्म निरूपयति—

यद्वाचाऽनभ्युदितं येन वागऽभ्युद्यते तदेव ब्रह्म त्वं विद्धि

**नेदं यदिदमुपासते ॥ ४ ॥**

यत् आत्मचैतन्यम् वाचा इन्द्रियरूपया वर्णाऽऽत्मिकया वा अनभ्युदितम् अनुक्तम ऽप्रकाशितम् येन चैतन्येन वाक् अभ्युद्यते लब्धसत्ताकं प्रकाशितं वा भवति तदेवाऽऽत्मचैतन्यम् त्वं ब्रह्म विद्धि जानीहि यदिदम् प्रसिद्धम् हिरण्यगर्भाऽऽदिकम् उपाऽऽसते उपासकाः इदं ब्रह्म न ॥ ४ ॥

**यन्मनसा न मनुतेयेनाऽऽहुर्मनोमतम् तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपाऽऽसते ॥ ५ ॥**

यदाऽऽत्मचैतन्यम् मनसाऽन्तःकरणेन न मनुते विषयान्न जानाति जीवाऽऽत्मनो हि सर्वविषयाऽवगतावऽन्तःकरणं करणं न साक्षिचित इतिभावः । पुनः येनाऽऽत्मचैतन्येन

मनोमतम् ज्ञातं प्रकाशितम् आहुऽऽराचार्याः तदेवेत्याऽऽदि पूर्ववत् ॥ ५ ॥

**यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते॥ ६॥**

यच्चेतनं चक्षुरिन्द्रियद्वारा रूपं न पश्यति किन्तु सर्वोऽपि जनो येन चेतनेन चक्षुरिन्द्रियाणि जानाति तदेवेत्याऽऽदि पूर्ववत् ॥

**यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदं श्रुतम् । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥**

यच्चेतनं श्रोत्रेन्द्रियेण शब्दं न गृह्णाति येन चेतनेनेदं श्रोत्रेन्द्रियं श्रुतं ज्ञातं भवति तदेवेत्याऽऽदि पूर्ववत् ॥ ७ ॥

**यत्प्राणेन न प्राणिति येन प्राणः प्रणीयते। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥८॥**

यच्चेतनं प्राणेन न जीवति किं च येन प्राणः प्रणीयते स्वकार्यसामर्थ्यवान्स्वसत्तावान् वा भवति भास्यते वा तदेवेत्याऽऽदि पूर्ववत् यदऽत्र शरीरे करणसम्बन्धशून्यं करणानां च प्रकाशकं चेतनं तद्ब्रह्मेति पञ्चश्रुतीनाऽमर्थः यद्वा यन्मनसेत्याऽऽदिश्रुति चतुष्टयेऽपि यदितिकर्मपदम् तथा चाऽत्र शरीरे सर्वो जनो मनआदिभिः तत्तद्विषयवत् यच्चेतनं न गृह्णाति सूक्ष्मत्वात्तद्ब्रह्म पूर्ववदऽन्यदित्यर्थः ॥ ८ ॥

इति प्रथमःखण्डः ।

---

तदेव ब्रह्म त्वं विद्धीति प्रयोगात्पुनर्ब्रह्मणि प्रासवेद्यत्वभ्रममपाकुर्वन्नाऽऽह—

यदि मन्यसे सुवेदेति दभ्र-
मेवापि नूनं त्वं वेत्थ ब्रह्मणो
रूपं यदस्य त्वं यदऽस्यदेवे-
ष्वऽथ नु मीमांस्यमेव ते मन्ये
विदितम् ॥ १ ॥

आत्मानं ब्रह्म सुष्ठ्वहं वेद वेद्मि इति यदि त्वं मन्यसे शिष्य तर्हि यदस्य ब्रह्मणो रूपं त्वं वेत्थ वेत्सि अपि नूनम् निश्चयतरः तद्दभ्रमेव अल्पमेव नाऽध्यात्ममेव किन्तु यदऽस्य ब्रह्मणो रूपं देवेषु त्वं वेत्थ तदऽपि दभ्रमेव । अल्पमेव वेद्यं भवति नाखण्डं व्यापि निरुपाधि चेतनमिति भावः । तस्मात् अथ नु इदानीमऽपि मीमांस्यमेव विचारणीयमेव ब्रह्म निरुपाधि ते तव विचार्यं शिष्य आह व्यापि ब्रह्म मयाविदितमित्यऽहं मन्ये ॥ १ ॥

कथमित्याऽऽकाङ्क्षायां प्रकारमाऽऽह शिष्यः—

**नाऽहं मन्ये सुवेदेति नो न वेदेति वेद च । यो नस्तद्वेद तद्वेद नो न वेदेति वेद च ॥२॥**

सुष्ठ्वहं ब्रह्म वेदेत्यऽहं न मन्ये नाऽहं ब्रह्म वेदेति च नो मन्ये किन्त्वहं वेद अयं भावः न घटादिवदिन्द्रियैरऽहं वेद न च तैरेव सूक्ष्मत्वाऽऽदिदोषेण न वेद किन्तु विचारजशुद्धचिदाकारानिर्वासनाऽन्तःकरणवृत्त्या जगत्युन्मूलिते शिष्ट स्वयं प्रकाशविधया वेदेति अथ स्वनिश्चयदृढतां सूचयति तत्पूर्वोक्तं विरुद्धम् नोनवेदेति वेदचेति नोऽस्माकं वाक्यमऽविरुद्धं यो वेद स एव तद्ब्रह्म वेद ॥ २ ॥

शिष्यतुष्टये सिद्धान्तयति यस्येति

**यस्याऽमतं तस्य मतं मतं**

यस्य न वेद सः । अविज्ञातं विजानतां विज्ञातमऽविजानताम् ॥ ३ ॥

यस्य अमतम् येन ज्ञेयतया ब्रह्म न निश्चितम् तस्य मतम् तेन स्वयं प्रकाशतया ब्रह्म ज्ञातम् यस्य मतम् येन ज्ञेयतया ब्रह्म निश्चितम् स न बेद ज्ञानं हि ब्रह्म न ज्ञेयमिति स्थितेः। अथ फलितभेदमाऽऽह विजानताम् विज्ञानिनाम् अविज्ञातम् विज्ञेयरूपं ब्रह्म न अविजानताम् अज्ञानाम् विज्ञातम् विज्ञेयस्वरूपमेव घटादिवत्किमऽपि ब्रह्म ॥ ३ ॥

कथं क ब्रह्म निश्चीयते किं च तेन भवतीत्याऽऽह–

प्रतिबोधविदितं मतमऽमृतत्वं हि विन्दते। आत्मना वि-

न्दते वीर्यं विद्यया विन्दतेऽ-
मृतम् ॥ ४ ॥

घटोऽयमित्याऽऽद्याऽऽकारबोधं बोधं प्रति विदितम् तत्तद्बोधसाक्षितया प्रसिद्धम् यद्वृत्याऽऽत्मचैतन्यम् तदेव मतम् ब्रह्मत्वेन निश्चितं चेद्भवेत्तर्हि हि निश्चये अमृतत्वं मृतिशून्यत्वं विन्दते लभते एव उक्तनिश्चयरूपं वीर्यं मृत्युवारणेवलम् उक्तविधया आत्मना विन्दते स्वरूपचेतनेन लभते नान्यतः अयं भावः वस्त्वऽधीनं हि ज्ञानं यथावस्तु भवति मृतिहीनं चाऽऽत्मवस्त्वेवेति तथा च वीर्यरूपविद्यया ब्रह्माऽऽत्मज्ञानेनाऽमृतं मोक्षं लभते इति सिद्धम् ॥ ४ ॥

ब्रह्माऽऽत्मज्ञानं च मनुष्यदेह एव कार्यमेवेति सूचयति ।

इह चेदवेदीदऽथ सत्यम-

ऽस्ति न चेदिहाऽवेदीन्महती विनष्टिः। भूतेषु भूतेषु विचित्य धीराः प्रेत्याऽस्माल्लोकादऽमृता भवन्ति ॥ ५ ॥

चेद्यदीह मनुष्यभावे ब्रह्माऽऽत्मानमऽवेदीज्ज्ञातवाँस्तर्ह्यऽथाऽनन्तरं सत्यमऽस्ति सदा तस्य रूपम् चेदिह नाऽवेदीत्तर्हि महती विनष्टिः प्रचुरदुःखाऽनन्तजननमरणरूपमहद्विनाशस्तस्य तस्माद्धीरा बुद्धिमन्तः सर्वजीवेषु व्याप्तैकब्रह्माऽऽत्मानं विचित्याऽन्विष्य निश्चित्यास्माल्लोकात्प्रेत्य मरणाऽनन्तरमऽमृतामरणरहितब्रह्माऽऽत्मानो भवन्ति विदेहमुक्ता भवन्तीति भावः ॥ ५ ॥

इति द्वितीयः खण्डः ।

अथ ब्रह्मचेतनमेवसर्वशक्तीत्युत्कर्षसूचनेन
ब्रह्मजिज्ञासोत्पादायाऽऽख्यायिकांरच-
याति ब्रह्महेत्याऽऽदि ।

ब्रह्म ह देवेभ्यो विजिग्ये
तस्य ह ब्रह्मणो विजये देवा
अमहीयन्त त ऐक्षन्ताऽस्मा-
कमेवायं विजयोऽस्माकमेवा-
ऽयं महिमेति ॥ १ ॥

हेति स्फुटे देवेभ्यः देवाऽर्थम् ब्रह्मविजिग्ये अजयदऽसुरान्देवासुरसंग्रामे परन्तु तस्य ब्रह्मणो जये देवा अमहीयन्त स्वपूजामऽलभन्त कथम् तत्राऽऽह ते देवा ऐक्षन्त अमन्यन्त अयं विजयो महिमा चाऽस्माकमेवेति ॥ १ ॥

**तद्धैषां विजज्ञौ तेभ्यो ह प्रादुर्बभूव तन्न व्यजानन्त किमिदं यक्षमिति ॥ २ ॥**

एषां देवानान्तदऽभिमननम् ह विजज्ञौ स्फुटम् ज्ञातवत् ब्रह्मेति शेषःज्ञात्वा च तेभ्यो हि देवाऽर्थमेव तेजोमयमाऽऽविर्बभूव परन्तु यक्षं महत्पूज्यमिदं रूपं किम् इति न व्यजानन्त देवास्तद्ब्रह्म ॥ २ ॥

**तेऽग्निमब्रुवन् जातवेद एतद्विजानीहि किमिदं यक्षमिति तथेति ॥ ३ ॥**

ते देवाः अग्निं प्रत्यऽब्रुवन् हे जातवेदः इदं यक्षं किम् एतत्त्वं विजानीहीति अथाऽग्निः तथाऽस्तु इत्युक्त्वा ॥ ३ ॥

तदभ्यद्रवत्तमभ्यवदत्कोऽसी
त्यऽग्निर्वाहमऽस्मीत्यऽब्रवी-
ज्जातवेदा वा अहमऽस्मीति॥

तद्यक्षमभ्यद्रवत् यक्षाभिमुखं गतः अथ तमग्निं यक्षमवदत्त्वं कोऽसीति अथ अग्निर्वै जातवेदा वै अहमऽस्मीत्यऽग्निरऽब्रवीत्॥४॥

तस्मिंस्त्वयि किं वीर्यमि-
त्यऽपीदं सर्वम् दहेयं यदिदं
पृथिव्यामिति ॥ ५ ॥

ततो यक्षेण तस्मिंस्त्वयि किं बलमिति पृष्टोऽग्निः यदिदं पृथिव्यां सर्वमऽपीदमहं दहेयमित्युवाच ॥ ५ ॥

तस्मै तृणं निदधावेतद्दहेति
तदुपप्रेयाय सर्वजवेन तन्न श-

शाक दग्धुं स तत एव निववृते नैतदशकं विज्ञातुं यदेतद्यक्षमिति ॥ ६ ॥

अथ यक्षम् एतत्त्वं दहेत्युक्त्वा तस्मै अग्नये तृणं निदधौ स्थापितवत् अथाऽग्निः तत्तृणम् उपसमीपम् प्रेयाय प्रकर्षेण गतःपरन्तु सर्वजवेन वेगेन निजसर्वबलेन तत्तृणं दग्धुं न शशाक समर्थो न बभूव अथ सोऽग्निर्लज्जया तस्मात्तृणस्थानादेव निवृत्तः अथ चाऽऽगत्य देवान्प्रति यद्यादृशमेतद्यक्षमेतद्विज्ञातुमऽहं नाऽशकं न समर्थोऽभूवमित्युवाच ॥ ६ ॥

अथ वायुमऽब्रुवन् वायवे तद्विजानीहि किमेतद्यक्षमिति तथेति ॥ ७ ॥

अथाऽनन्तरं देवा वायुमऽब्रुवन् हे वायो शेषमुक्ताऽर्थम् ॥ ७ ॥

तदभ्यद्रवत्तमभ्यवदत्कोऽसीति वायुर्वा अहमऽस्मीत्यब्रवीन्मातरिश्वा वा अहमऽस्मीति ॥ ८ ॥

अभ्यद्रवद्वायुः तं वायुम् चतुर्थवदऽन्यत् ॥

तस्मिंस्त्वयि किं वीर्यमित्यपीदं सर्वमाऽऽददीय यदिदं पृथिव्यामिति ॥ ९ ॥

आददीय अहं गृह्णीयाम् ॥ ९ ॥

तस्मै तृणं निदधावेतदादत्स्वेति तदुपप्रेयाय सर्वजवेन

**तन्न शशाकाऽऽदातुं स तत एव निववृते नैतदऽशकं विज्ञातुं यदेतद्यक्षमिति ॥ १० ॥**

आदत्स्व गृहाण कम्पयेति यावत् आदातुं कम्पयितुम् पूर्ववदऽन्यत् ॥ १० ॥

**अथेन्द्रमब्रुवन्मघवन्नेतद्विजानीहि किमेतद्यक्षमिति तथेति तदभ्यद्रवत्तस्मात्तिरोदधे ११**

अथाऽनन्तरम् सर्वदेवाऽधिकशक्त्यऽभिमानिनं सर्वदेवेश्वरमिन्द्रमब्रुवन्देवा हे मघवन्नित्यादि पूर्ववत् तस्मादिन्द्रात् तिरोदधे अदृश्यं बभूव यक्षम् अनात्मन्यहं ममत्वाऽऽद्यऽभिमानदार्ढ्यं यावद्यस्य तावत्तस्य दूरतो ब्रह्माऽऽत्मतत्वमिति भावः ॥ ११ ॥

उक्ताऽभिमानलयहेतुतया महत्कृततिरस्कार आ-श्वऽभ्युदयायैव भवतीति च सूचयन्नाऽऽह स तस्मिन्निति।

**स तस्मिन्नेवाऽऽकाशे स्त्रि-यमाऽऽजगाम बहुशोभमाना-मुमां हैमवतीं तां होवाच कि-मेतद्यक्षमिति॥ १२॥**

यक्षनिभृतमानसः श्रद्धाभरनियन्त्रितोजि-ज्ञासया तिष्ठन् स इन्द्रः यत्र यक्षं तिरोहितं तत्रैवाऽऽकाशे हिमवतः कन्योमापार्वती तद्रू-पामऽतिसुन्दरीं स्त्रियमाऽऽजगाम दृष्ट्वा तस्याः समीपं गतः इन्द्रभक्तिविद्यारूपेणाऽऽविर्भू-तेति भावः एतद्यक्षं किमिति ह स्फुटं तां स्त्रियमुवाच पप्रच्छेन्द्रः॥ १२॥

इति तृतीयः खण्डः।

सा ब्रह्मेति होवाच ब्रह्मणो वा एतद्विजये महीयध्वमिति ततो हैव विदाञ्चकार ब्रह्मेति ॥

पृष्टं त्वया यक्षं ह किल ब्रह्म इत्युत्तरमुवाच सा स्त्रीन्द्रं प्रति ब्रह्मणो वै एतद्विजये अग्निवाय्विन्द्रैः सम्वादे य एष विजयस्तस्मिन् यूयं महीयध्वम् देवासुरसंग्रामविजयये इव स्वपूजां लभध्वमिति चोवाचाऽऽक्षेपतः अयं भावः यथैतद्विजयो न युष्माकमऽचेतनानां तथा पूर्वविजयोऽपि न ततो ब्रह्मैव सर्वशक्तिवृथा वोहङ्करणमिति ततः स्त्रीवाक्यादेव ह स्फुटम् अथवा ततोऽनन्तरं स्फुटमेव यक्षं ब्रह्मेतिविदाञ्चकारेन्द्रः विद्ययाऽऽवरणभङ्गब्रह्माऽऽत्मसाक्षात्कारएवेति भावः ॥ १ ॥

स्वल्पमऽप्याऽऽत्मज्ञानं धन्ययतीति सूचयति ।

तस्माद्वा एते देवा अतित-

रामिवाऽन्यान्देवान् यदऽग्नि-
वायुरिन्द्रः तेह्येनन्नेदिष्टं पस्पृ-
शुः ते ह्येनत्प्रथमो विदाञ्चकार
ब्रह्मेति ॥ २ ॥

यद्यस्मादऽग्निर्वायुरिन्द्रः ब्रह्म दृष्टवान् तस्माद्वै एते देवा अन्यदेवानऽपेक्ष्याऽतितरामिवं अत्युत्कृष्टाएव ते हि देवा एनब्रह्मनेदिष्टं पस्पृशुः समीपं प्राप्ताः सर्वतः प्रथमं ब्रह्मेतिविदाञ्चक्रुश्च इदमेवौत्कृष्यम् ॥ २ ॥

अग्निवाय्वपेक्षयाऽपीन्द्रौत्कृष्ट्यं
दर्शयति तस्माद्वा इति—

तस्माद्वा इन्द्रोऽतितरामि-
वाऽन्यान्देवान् सह्येनन्नेदिष्टं
पस्पर्श स ह्येनत् प्रथमो विदा-
ञ्चकार ब्रह्मेति ॥ ३ ॥

हि यतः स इन्द्रो ब्रह्माऽन्तिकं गतो यक्षं ब्रह्मेति स एव प्रथमं स्त्रीवाक्याज्ज्ञातवान् अन्ये तु पश्चादिन्द्रतस्तमाहुः इत्यादि पूर्ववत् ॥ ३ ॥

ब्रह्माऽऽविर्भावतिरोभावौ वर्णयत्युपमानतः—

**तस्यैष आदेशो यदेतद्विद्युतो व्यद्युतदा इतीन्न्यमीमिषदा इत्यधिदैवतम् ॥ ४ ॥**

औइवाऽर्थौइत् चाऽर्थः । तस्य यक्षपदोक्तब्रह्मण एषः अयम् आदेशः उपदेशः उपमानम् तदेतद्ब्रह्मविद्युतइवव्यद्युतद्भात् न्यमीमिषदाऽऽनिमेषं कृतवदिव इतीत् इति च अयं च विद्युत इति बहुत्वं ब्रह्मौत्कर्ष्याय विद्युतश्चक्षुषश्चयथाऽऽशुप्रकाशाऽप्रकाशौ तथाऽऽशुयक्षाऽविर्भावतिरोभावौ सम्पन्नाविति यावत् इत्यऽधिदैवतम् देवताविषयकमिदमुपमानम् ॥ ४ ॥

अथाऽध्यात्मं यदेतद्गच्छतीव च मनोऽनेन चैतदुपस्मरत्यऽभीक्ष्णं सङ्कल्पः ॥ ५ ॥

अथाऽध्यात्मम् जीवाऽऽत्मसम्बन्धिकिञ्चिद्ब्रह्मज्ञापकमऽथोच्यते यत् यस्मात् जिज्ञासुमनः स्ववृत्त्या एतद्ब्रह्म गृह्णातीव च अनेन च मनसा ब्रह्म उपसमीपे हृद्येव स्मरति जिज्ञासुः ब्रह्मविषयकसङ्कल्पोऽप्यऽभीक्ष्णं पुनः पुनर्भवति ततो मनो ब्रह्मज्ञापकम् ॥ ५ ॥

मनसा स्वरूप एव ब्रह्मज्ञानो-
पायमाऽऽह तद्धेति—

तद्ध तद्वनंनामतद्वनमित्युपासितव्यं स य एतदेवं वेदाभिहैनं सर्वाणि भूतानि संवाञ्छन्ति ॥ ६ ॥

तद्ब्रह्म ह किल तद्वनमिति नाम ख्यातम् तेषामुपाधितोभिन्नानामिवाऽऽत्मनां वनम-

ऽद्वैतभावमित्यन्वर्थाचेयं संज्ञा ब्रह्मणः अत-स्तद्वनमिति नाम उपासितव्यम् नामार्थ-भावना कार्या स यः कश्चित् एवमुक्तप्रका-रेणैतद्ब्रह्म वेदोपास्ते एनमुपासकं सर्वाणि भूतानि ह किल अभिसम्वाञ्छन्ति आत्मा-नमिव सत्कुर्वन्तीति भावः ॥ ६ ॥

ब्रह्मविद्या काचिदऽन्येतिभ्रमनिरासायाऽऽह उपनिषदमिति ।

**उपनिषदं भो ब्रूहीत्युक्ता त उपनिषद्ब्राह्मीं वाव त उपनि-षदमऽब्रूमेति ॥ ७ ॥**

श्रुत्वोक्ताऽखिलं शिष्य आह भो हे भगवन् उपनिषदम् अतीवाऽन्तरङ्गसाधनं त्वं ब्रूहि इति अथ गुरुः ते तुभ्यम् मयोपनिषदुक्ता किं विषया सेति शिष्यजिज्ञासाऽनुत्पत्तये वदति ब्राह्मीं वाव ब्रह्मविषयामेव उपनिषदं ते तुभ्यं वयमऽब्रूम इति वाक्यसमाप्तौ ॥७॥

ब्रह्मविद्यासाधनान्याऽऽह तस्यै इति ।

**तस्यै तपो दमः कर्मेति प्रतिष्ठाः वेदः सर्वाङ्गानि सत्यमाऽऽयतनम् ॥ ८ ॥**

तपः स्वधर्माचरणम् दमोऽखिलेन्द्रियनिग्रहः कर्म निष्कामाग्निहोत्राऽऽदि इति इत्यादि तस्यै विद्यायै ब्रह्मविद्यार्थम् ब्रह्मविद्यासाधनमित्याऽऽदीति यावत् तथा वेदास्तदङ्गानि च शिक्षादीनि प्रतिष्ठा आश्रयस्तस्यै तस्या इति यावत् तथा सत्यम् सर्वव्यवहारेषु याथार्थ्यम् तदऽपि आयतनमाऽऽश्रयस्तस्यै तस्याः । वेदादौ ब्रह्मविद्योपलभ्यत इति वेदाद्यऽपि साधनमेव तस्या इति भावः॥

अव्यभिचारसूचनाय पुनरन्ते ब्रह्मविद्याफलमाऽऽह यो वै इति ।

**यो वा एतामेवं वेदाऽपहत्य पा-**

प्मानमऽनन्ते स्वर्गे लोके ज्ये-
ये प्रति तिष्ठति प्रतितिष्ठति ॥

यः वै निश्चयेन एवमुक्तप्रकाराम् एतामुक्तां ब्रह्मविद्याम् वेद सःपाप्मानम् सकलकर्मात्मककल्मषम् अपहत्य विधूय विद्यावह्निना दग्ध्वा अनन्तेऽन्तरहिते ज्येयेऽतिशयेन वृद्धे महति ब्रह्माख्ये इति यावत् स्वर्गे निरतिशयसुखात्मके लोके पदे प्रतितिष्ठति अचलप्रतिष्ठां लभते न पुनराऽऽवर्त्तते इति भावः पदावृत्तिर्ग्रन्थसमाप्तिं द्योतयति ॥९॥

इति चतुर्थः खण्डः ।

दययाऽनन्तरामस्य मृदुर्ग्रन्थोऽयमुम्भितः ।
श्रीस्वामिभास्करानन्दैः काश्यांकेनाऽऽख्यवेदके ॥
कृशा मद्धीः क भाष्येण क वेदान्ताऽब्धिमन्थनम् ।
तथाऽप्ययघटितं किं वा गुरुदेवदयालवे ॥ २ ॥

इत्युपनिषत्प्रसादे केनोपनिषत् ।

श्रीः ।

श्रीगणेशाय नमः ।

अथेश्वरो यजुर्वेदकठशाखाब्राह्मणे ब्रह्मात्मतत्त्वं जिज्ञासूनामुपकाराय प्रवृत्तो जिज्ञासायाजननाय दार्ढ्याय च ब्रह्मविद्या महिमपरामाख्यायिकामादत्ते उशन्निति ।

**उशन् ह वै वाजश्रवसः सर्वं वेद संददौ तस्य ह नचिकेता नाम पुत्र आस ॥ १ ॥**

ह वै एतावतीतार्थस्मारकौ अरुणाऽपरसंज्ञकस्य वाजश्रवोऽभिधस्य पुत्रो वाजश्रवसः उद्दालकः । उशन् फलमिच्छन् सर्वस्वदक्षिणाकयागान्ते आचार्यादिभ्यः सर्वं वेदसम् सर्वन्धनं ददौ तस्योद्दालकस्य ह

किल नचिकेताः नाम प्रसिद्धः पुत्रः आस बभूव ॥ १ ॥

**तᳪं॰ ह कुमारᳪं॰ सन्तं दक्षिणासु नीयमानासु श्रद्धाऽऽविवेश सोऽमन्यत ॥ २ ॥**

दक्षिणारूपासु गोषु आचार्यादि पुरो नीयमानासु पित्राप्रापितासु दत्तासु सतीषु श्रद्धोचितबुद्धिः कुमारं सन्तं कौमारवयसि वर्तमानम् तं नचिकेतसम् ह किल आविवेश हृदि जाता ततः सः अमन्यत निश्चितवान् ॥ १ ॥

**पीतोदका जग्धतृणा दुग्धदोहा निरिन्द्रियाः अनंदा नाम ते लोकास्तान्स गच्छति ता ददत् ॥ ३ ॥**

पीतजलाः भुक्ततृणाः भोगशक्तिहीना इतियावत् दुग्धहीनाः इन्द्रियशक्तिशून्याः वृद्धा इति भावः एवंभूतायागावः ताः ददत् यः सः अनन्दाः सुखहीनाः नाम ते प्रसिद्धाः लोकाः तान् गच्छति ॥ ३ ॥

**सहोवाच पितरं तत कस्मै मां दास्यसीति द्वितीयं तृतीयन्त ठं० होवाच मृत्यवे त्वा ददामीति ॥ ४ ॥**

तस्मान्नेष्टफलभाग्भवेत्पिता परमोत्तमधनं च पुत्रः प्रियतरत्वपरमोपकारकात्वाभ्याम् पुत्रशब्दसार्थकताकालश्चोपस्थितः इतिनिश्चित्य सपुत्रःपितरं ह किल उवाच हे तात पितः मां कस्मै त्वं दास्यसीति उत्तराऽलाभतः एवं द्वितीयं तृतीयं च वाक्यमुवाच

ततः तं पुत्रं ह किल कुपितः पितोवाच मृत्यवे यमाय त्वां ददामीति ॥ ४ ॥

ततश्चिन्तयति चित्ते पुत्रो बहूनामिति ।

**बहूनामेमिप्रथमो बहूनामेमिमध्यमः किंस्विद्यमस्य कर्तव्यं यन्मयाद्य करिष्यति ॥**

बहूनां मध्ये प्रथमः एमि उत्तमोस्मि बहूनां मध्यमः न निकृष्टः तत्कथं मम मृतिमिच्छति पितेति भावः किं च स्विद्धितर्के यमस्य किं कर्तव्यं कार्यमस्ति यत्कृत्यमद्य दत्तेन मया करिष्यति पिता अहो क्रोधमहिमा न कृत्यामिति भावः ॥ ५ ॥

एवमपि पाल्यमेव पितृवचो मयामत्पिता चेति द्वयोर्वैराग्याय चाह पितरमनुपश्येति—

**अनुपश्य यथापूर्वेप्रतिपश्य**

तथापरे सस्यमिव मर्त्यः पच्य-
ते सस्यमिवाऽऽजायते पुनः ॥

पूर्वे महान्तो यथा येन प्रकारेण स्थिता-स्तं प्रकारम् तथा तेनैव प्रकारेण परे इदानीन्तना ये महान्तस्तेषां प्रकारं पुनस्त्वं पश्य हे तात रे मन इति वा दृष्ट्वा तथैव कुरु मामद्धेतुशोकमिति भावः मर्त्यो मरणधर्मा मनुष्यस्तु गोधूमादिवत्पक्वो भवति आ सर्वतः उत्पद्यते पुनः सस्या न शोकविषया इति भावः ॥ ६ ॥

एवं विशोकं तपसा तातेन प्रेषितो यमाय ब्रह्मलोकगतयमगृहे त्रिरात्रमुवास पुत्रः तत आगतं यममनुगा ऊचुः वैश्वानर इति—

वैश्वानरः प्रविशत्यतिथिर्ब्रा-
ह्मणो गृहान् तस्यै ताꣳशा-

न्ति कुर्वन्ति हर वैवस्वतोद-
कम् ॥ ७ ॥

हे वैवस्वत सूर्यसुत यम ब्राह्मणो तिथिः वैश्वानरोऽग्निरूपः गृहान्प्रविशत्यायति त-स्याग्नेः एतां पाद्याद्यसपर्यारूपां शान्तिं कु-र्वन्ति गृहस्थाः ततो निजकल्याणाय जलं हर देह्यतिथये ॥ ७ ॥

आशाप्रतीक्षे सङ्गतꣳ सू-
नृतां चेष्टापूर्ते पुत्र पशूꣳश्च-
सर्वान् एतद्वृङ्क्ते पुरुषस्या-
ल्पमेधसो यस्यानश्नन्वसति
ब्राह्मणो गृहे ॥ ८ ॥

आशा अदृष्टवस्त्विच्छा दृष्टविषयेच्छा प्रतीक्षा सङ्गतं ध्यानम् सूनृता प्रियोक्तिः इष्टं यागादि आपूर्त्तमारामादिनिर्माणम् यस्य

गृहे ब्राह्मणोऽनश्नन्नभुञ्जानो वसति तस्या-
ल्पबुद्धेराशादिकमाशादि षट् क्रियाजफलं
सर्वपुत्रपशूंश्चैतत्सकलं वृङ्क्ते नाशयति स
ब्राह्मणः ॥ ८ ॥

एतच्छ्रुत्वातिथिं गत्वा मृत्युरुवाच तिस्र इति—

**तिस्रो रात्रीर्यदवात्सीर्गृहे मे-**
**ऽनश्नन्ब्रह्मन्नतिथिर्नमस्यः न-**
**मस्तेऽस्तु ब्रह्मन्स्वस्ति मेऽस्तु**
**तस्मात्प्रति त्रीन्वरान्वृणीष्व ॥**

हे ब्रह्मन् नचिकेतः यद्यस्मादतिथिर्नम-
स्यो नमस्कारार्हस्तस्मात्तुभ्यं नमोस्तु यद-
नश्नन्मम गृहे त्वमवात्सीः तस्मात् हे ब-
ह्मन्मह्यं स्वस्त्यस्तु क्षमया तद्दोषशान्त्याम-
ङ्गलमस्तु यत्तिस्रो रात्रीरवात्सीस्तस्मात्
रात्रीः प्रति त्रीन्वरान्वृणीष्व गृहाण मत्तो-

भीष्टान् एवमत्यपराधशान्तिर्नान्यथेतिभा-
वः ॥ ९ ॥

नचिकेता आह शान्तेति—

शान्तसङ्कल्पः सुमना यथा-
स्याद्वीतमन्युर्गौतमो माभिमृ-
त्यो त्वत्प्रसृष्टं माभिवदेत्प्रतीत
एतत्त्रयाणां प्रथमं वरं वृणे ॥

हे मृत्यो यम गौतमगोत्रः पिता माभि
मां प्रति निवृत्तक्रोधः प्रसन्नमनाः शान्त-
मन्मरणसंकल्पः यथा स्यात् ततश्च प्रतीतः
मत्पुत्रोयं नचिकेता इति विश्वस्तस्सन् त्वया
प्रेषितं मां प्रति वदेत् त्रयाणां मध्ये एत-
द्वरं प्रथममहं वृणे स्वीकरोमि ॥ १० ॥

यम आह यथेति—

यथा पुरस्ताद्भविता प्रतीत

औद्दालकिरारुणिर्मत्प्रसृष्टः-
सुखं रात्रीः शयिता वीतमन्यु-
स्त्वां ददृशिवान्मृत्युमुखात्प्र-
मुक्तम् ॥ ११ ॥

यमलोकाद्गतं त्वां दृष्टवान् योऽरुणपुत्र-उद्दालकस्ते पिता सः मया प्रेरितः पुरस्तात्पूर्वं यथा तथा विश्वस्तो भविष्यति निवृत्तक्रोधः आगमिष्यमाणरात्रिषु सुखेन शायिष्यते च ॥ ११ ॥

लब्ध्वाद्य वरमाह स्वर्गे इति—

स्वर्गे लोकेन भयं किं च
नास्ति न तत्र त्वं न जरया
बिभेति उभे तीर्त्वाऽशनाया-
पिपासे शोकातिगो मोदते
स्वर्गलोके ॥ १२ ॥

स त्वमग्निꣳ स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि त्वꣳ श्रद्दधानाय मह्यम् स्वर्गलोका अमृतत्वं भजन्ते एतद् द्वितीयेन वृणे वरेण ॥ १३ ॥

स्वर्गे किञ्चन भयं नास्ति तत्र स्वर्गे त्वं मृत्युर्न जरया वार्द्धक्येनापि न बिभेति जनः पानभोजनेच्छे द्वे त्यक्त्वा शोकशून्यश्च तत्र हृष्यति किंच स्वर्गलोकवन्तोऽमृतत्वं देवत्वं लभन्तेऽतः स्वर्गश्रद्धायुक्ताय मह्यम् हे मृत्यो स्वर्ग्यं स्वर्गाय हितं स्वर्गदमग्निं त्वं प्रब्रूहि माब्रूहि न जानामीति यतः सम्प्रसिद्ध-स्त्वमध्येषि जानासि नान्यथा स्वर्ग्यसीति भावः द्वितीयवरेणैतदहं वृणे ॥ १२-१३ ॥

यमः प्रति जानीते प्रते इति—

प्रते ब्रवीमि तदुमेनिबोध

स्वर्ग्यमग्निं नचिकेतः प्रजानन्
अनन्तलोकाप्तिमथो प्रतिष्ठां
विद्धि त्वमेतं निहितं गुहायाम्

यत्त्वया वृतं तत् उ वितर्के ते तुभ्यमहं प्रब्रवीमि मे मत्तः त्वं निबोध हे नचिकेतः स्वर्ग्यमग्निं प्रजानन्नहमस्मि विधिज्ञानां गुहायां बुद्धौ स्थितमेतमग्निमक्षयस्वर्गलोकप्राप्तिकरम् अथोभूतात्मकत्वेन जगतः प्रतिष्ठामाश्रयं च त्वं विद्धि जानीहि ॥ १४ ॥

ईश्वर उवाच लोकादिमिति ।

लोकादिमग्निं तमुवाच तस्मै॥
या इष्टका यावतीर्वा यथावा स
चापि तत्प्रत्यवदद्यथोक्तमथा-
स्य मृत्युः पुनरेवाह तुष्टः॥१५॥

लोकादिं जगत्कारणं तं वृतमग्निम् अग्नौ

चयनार्थं याः यादृग्रूपाः यावतीः यत्संख्याकाः इष्टकास्ताः यथा वा येन प्रकारेण ताश्चीयन्ते सर्वमेतत्तस्मै नचिकेतसे यम उवाच नचिकेता अपि यथोक्तं यादृशं कथितं तादृशं तत् यमोक्तं यमं प्रत्यवदत् अथ यथावद्ग्रहणे नास्य नचिकेतसस्तुष्टो मृत्युः पुनरुवाच॥१५॥

**तमब्रवीत्प्रीयमाणो महात्मा वरं तवेहाद्य ददामि भूयः तवैव नाम्ना भविता यमाग्निः सृङ्कां चेमामनेकरूपां गृहाण॥१६॥**

महात्मोदारधीर्यमः प्रीतियुतो ब्रवीन्नचिकेतसम् अद्येह भूयः पुनस्तव वरं ददामीति किं तदाह उपदिष्टोयमग्निस्त्वन्नाम्नैव लोके प्रसिद्धिं यास्यति अनेकमणिमयत्वेन बहुरूपां सृङ्कांसृमितिशब्दं कायतीति सृङ्काख्यामिमां मालां च त्वं गृहाणेति॥१६॥

कर्मादि स्तौति यमः त्रिणाचिकेत इति—

त्रिणाचिकेतस्त्रिभिरेत्य संधिं त्रिकर्मकृत् तरति जन्ममृत्यू ब्रह्मजज्ञं देवमीड्यं विदित्वा निचाय्येमाᳬं शान्तिमत्यन्तमेति ॥ १७ ॥

त्रिभिर्मातृपित्राचार्यैः सन्धिं सम्बन्धमेत्य प्राप्य जन्मतः क्रमेण तेषां शिक्षया शुद्धः अध्ययनार्थज्ञानानुष्ठानैः त्रिवारं संपादितनचिकेतस्संज्ञकाग्निः इज्याध्ययनदानरूपत्रिकर्मकर्ता नाप्नोति जन्ममृत्यू किंच देवादि स्तुत्यं देवं द्योतनात्मादित्यादिरूपं हिरण्यगर्भजत्वात् ज्ञं सर्वज्ञं शास्त्रतोऽग्निं विदित्वा निचाय्य द्विसन्ध्यं संवत्सरं कृतविंशत्यधिकसप्तशताग्निहोत्रेष्टकाचिताग्निरहमेवेति

भावयित्वा इमां हृदिस्थितां शान्तिमतिशयेनाप्नोति ॥ १७ ॥

त्रिणाचिकेतस्त्रयमेतद्विदित्वा य एवं विद्वाँश्चिनुते नाचिकेतम् ।

स मृत्युपाशान्पुरतः प्रणोद्य शोकातिगो मोदते स्वर्गलोके ॥ १८ ॥

त्रिश्चैतैतदग्निकः इष्टकानां स्वरूपं संख्याऽग्निहोत्राऽनुष्ठानरूपचयनप्रकारश्चैतत्त्रयं ज्ञात्वा यः एवमुक्ता भेदेन विद्वान् नाचिकेतमग्निं चिनुते क्रतुं करोति सः अज्ञानादिपाशान्प्रथमं विधूय शोकशून्यः स्वर्गे मोदते ॥१८॥

द्वितीयमुपसंहरन् तृतीयवरमवतारयति यमः एष इति ।

एष तेग्निर्नाचिकेतः स्वर्ग्यो-

यमवृणीथा द्वितीयेन वरेण एतमग्निं तवैव प्रवक्ष्यन्ति जनासस्तृतीयं वरं नचिकेतो वृणीष्व ॥ १९ ॥

हे नचिकेतः द्वितीयवरेण यमग्निं त्वमवृणीथाः स्वर्ग्य एषोऽग्निस्ते तुभ्यमुक्तः जनासः जनाः एतमग्निं तवनाम्ना वक्ष्यन्ति नास्यमालायावा तृतीयत्वमिति वृणीष्व तृतीयम् ॥ १९ ॥

देहद्वयातिरिक्तात्मज्ञानायोवाच
नचिकेताः ये यमिति—

ये यं प्रेते विचिकित्सामनुष्येऽस्तीत्येकेनायमस्तीति चैके एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीयः ॥२०॥

प्रेते मृते लोकान्तरंगते मनुष्ये प्राणिनि इयं प्रसिद्धा या विचिकित्सा संशयः एके आचार्याः स्थूल इवात्र सूक्ष्मेप्यहमहमिति प्रसिद्धो यमात्मा स्थूलादिवास्मादप्यतिरिक्तोस्तीति वदन्ति एके च नास्तीति इत्याकारिकेति शेषः त्वया बोधितोहमेतत्संशयास्यदमात्मवस्तु यथा जानीयां तथोपदिश एष मे तृतीय वरः स्थूलदेहातिरिक्तात्मनि संशयस्तु मृतानामालये यमालये नष्ट एव ममेति भावः ॥ २० ॥

अयमधिकारी नवेति निश्चयायोपक्रमते यमः देवैरिति ।

देवैरत्रापि विचिकित्सितं
पुरा न हि सुज्ञेयमणुरेष धर्मः
अन्यं वरं नचिकेतो वृणीष्व
मामोपरोत्सीरतिमासृजैनम् ॥

अत्रात्मवस्तुनि देवैरपि विचिकित्सितं संशयः कृतः पूर्वम् अतो नहि नैव सुज्ञयमिदं वस्तु धर्मः सर्वस्य धर्ता एष आत्माणुर्यतः ततो हे नचिकेतः अन्यं वरं वृणीष्व मामां-मोपरोत्सीः हठं मा कुरु मा मां प्रत्येनं वरं त्वमतिसृज त्यज ॥ २१ ॥

नचिकेता उवाच देवैरिति—

देवैरत्रापि विचिकित्सितं
किल त्वं च मृत्यो यन्न सुज्ञे-
यमात्थ वक्ता चास्य त्वादृ-
गन्यो न लभ्यो नान्यो वर-
स्तुल्य एतस्य कश्चित् ॥२२॥

हे मृत्यो यद्यस्माद्देवानामप्यत्र संशयः किल एतादृशस्त्वमपि दुर्ज्ञेयं कथयसि अस्य वस्तुनो वक्तापि त्वत्तुल्योन्यो न लभ्यः

तस्मादेतस्यात्मवस्तुनस्तुल्यो नान्यः कश्चिद्वरोस्ति ॥ २२ ॥

यम उवाच—

**शतायुषः पुत्रपौत्रान्वृणीष्व**
**बहून्पशून्हस्तिहिरण्यमश्वान्**
**भूमेर्महदायतनं वृणीष्व स्वयं**
**च जीव शरदो यावदिच्छसि ॥**

शतवर्षजीविनः पुत्रपौत्रान् पशून् गवादीन् हस्तिनः सुवर्णम् अश्वान् महन्मण्डलं भुवः त्वं वृणीष्व स्वयं च यावद्वायनं जीवितुमिच्छसि तावतीः शरदो वर्षाणि त्वं जीव ॥ २३ ॥

**एतत्तुल्यं यदि मन्यसे वरं**
**वृणीष्व वित्तं चिरजीविकां च**
**महाभूमौ नचिकेतस्त्वमेधि**

कामानां त्वा कामभाजं क-
रोमि ॥ २४ ॥

यद्येतदात्मवस्तुतुल्यमन्यं कंचिद्वरं त्वं मन्यसे तर्हि तं गृहाण धनं वंशगामिजीविकाम् सकलभूमौ त्वमेधि वर्द्धस्व राज्यं कुरु वा सर्वविषयाणां पात्रं त्वां करोमि वा ॥ २४ ॥

ये ये कामा दुर्लभा मर्त्य-
लोकेसर्वान्कामाश्छन्दतःप्रा-
र्थयस्व इमा रामाः सरथाः
सतूर्यानहीदृशालम्भनीयाम-
नुष्यैः आभिर्मत्प्रत्ताभिः परि-
चारयस्वनचिकेतो मरणं मा-
नुप्राक्षीः ॥ २५ ॥

सर्वानिष्टविषयान् दुर्लभान् स्वेच्छया-या च किंच हि यत ईदृश्यो न मनुष्यलभ्या अतो रथवाद्यसहिता इमा रामा अप्सरसः सन्ति मद्दत्ताभिराभिः स्वसेवां कारय मरणसंबन्धिप्रश्नं मा कुरु ॥ २५ ॥

नचिकेता उवाच—

**श्वोभावा मर्त्यस्य यदन्तकैत-त्सर्वेन्द्रियाणां जरयन्ति तेजः अपि सर्वं जीवितमल्पमेव त-वैव वाहास्तव नृत्यगीते ॥२६॥**

हेऽन्तक मृत्यो यद्यतः सर्वे पदार्थाः श्वः परेद्युरभावो येषान्तादृशाः किंच मनुष्यस्य सर्वेन्द्रियाणामेतत्तेजो नाशयन्ति सर्वं ब्रह्मान्तं जीवनमप्यल्पमेव ततो नैभिर्मेकृत्यम् किन्तु वाहादयस्तवैव सन्तु ॥ २६ ॥

**न वित्तेन तर्पणीयो मनुष्यो**

लप्स्यामहे वित्तमद्राक्ष्म चेत्त्वाम् जीविष्यामो यावदीशिष्यसि त्वं वरस्तु मे वरणीयः स एव ॥ २७ ॥

किंच न धनेन मनुष्यस्तृष्णान्तं याति धनेच्छा चेत् त्वद्दर्शनप्रभावादेव तद्भविष्यति यावत्त्वं स्वाधिकारे स्थास्यसि तावत्त्वत्तो भयाभावाज्जीवनं च स्यादेव ततोऽन्यथा सिद्धेयत्नानौचित्यात्स एव वरो मया लभ्यः ॥

अजीर्यताममृतानामुपेत्य जीर्यन्मर्त्यः क्वधःस्थः प्रजानन् अभिध्यायन्वर्णरतिप्रमोदानतिदीर्घे जीविते को रमेत ॥ २८ ॥

जरामृत्युयुक्तः कुत्सितोधःस्थो भूवासी जरामरणरहितानामुपसमीपं गत्वा क्षयित्वादिदुष्टान्विषयान् जानन् को विवेकी तेषां रूपरमणानन्दान्नमनासि भावयंश्चिरजीवनेच्छां कुर्वीत न कोपीति भावः ॥ २८ ॥

**यस्मिन्निदं विचिकित्सन्ति मृत्यो यत्साम्पराये महति ब्रूहि नस्तत् योयं वरो गूढमनुप्रविष्टो नान्यं तस्मान्नचिकेता वृणीते ॥ २९ ॥**

हे मृत्यो यस्मिन्वस्तुनि इदं मदुक्तसंशयनं कुर्वन्ति यच्च महति परलोकेस्ति तन्नोस्मभ्यं ब्रूहि योऽयं मम वरो गूढमात्मानमनुप्रविष्टस्तदन्यवरं न वृणीते नचिकेताः मुधैव प्रलोभयसीतिभावः ॥ २९ ॥

इति प्रथमवल्ली ।

प्रीतो यम आहान्यदिति—

अन्यच्छ्रेयोन्यदुतैव प्रेयःते उभे नानार्थे पुरुषठं सिनीतः तयोः श्रेय आददानस्य साधु भवति हीयतेर्थाद्य उ प्रेयो वृणीते ॥ १ ॥

श्रेयो मोक्षोन्यत् प्रेयः प्रियतरं भोग्य-जातम् उत अपि अन्यदेवते द्वे श्रेयः प्रेयसी स्वस्वप्रयोजनेन पुरुषं जीवं बध्नीतः परंतु त-योर्मध्ये श्रेयो गृह्णतः साधुकल्याणं भवति उ वितर्के यः प्रेयोङ्गीकुरुते स परमार्थात् च्युतो भवति ॥ १ ॥

ज्ञात्वापि किमिति भोग एव प्रवर्तन्ते न योगे वहवोऽत आह श्रेयश्चेति—

श्रेयश्च प्रेयश्च मनुष्यमेत-

स्तौ संपरीत्य विविनक्ति धीरः श्रेयो हि धीरोऽभिप्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद्वृणीते ॥ २ ॥

श्रेयःप्रेयसी मनुष्यं तन्मनः आयातः परन्तु धीरो विवेकी तौ प्राप्तपदार्थौ सम्यग्विचार्य फलसाधनस्वरूपतः पृथक्कृत्वा जानाति ततः प्रेयसः प्रेयो विहाय श्रेयो हि श्रेयः एव वृणीते मन्दस्त्वविवेकी अप्राप्त प्रापणप्राप्तपरिपालनरूपयोगक्षेमहेतोः प्रेय एव ॥ २ ॥

स त्वं प्रियान्प्रियरूपांश्च कामानभिध्यायन्नचिकेतोऽत्यस्राक्षीः नैतां सृङ्कां वित्तमयीम-

वासोयस्यां मज्जन्ति वहवो मनुष्याः ॥ ३ ॥

हे नचिकेतः स मत्परीक्षितस्त्वं तु प्रियान्प्रियरूपान्हस्त्यश्वाप्सरःप्रभृति विषयान्नश्वरांश्चिन्तयन्नत्याक्षीः किंच यस्यामासक्ता भवन्ति मनुजाः एतां रत्नमालां दृष्ट्वापि न प्राप्तः धीरोसीति भावः ॥ ३ ॥

श्रेयः प्रेयोविषयेबुद्धी विद्याविद्येविवेचयन्योग्यतां मनुते दूरमिति—

दूरमेते विपरीते विषूची अविद्याया च विद्येति ज्ञाता विद्याभीप्सिनं नचिकेतसं मन्ये नत्वा कामा वहवोऽलोलुपन्त॥

या अविद्याशब्देन या च विद्याशब्देन ज्ञाता एते दूरं भिन्ने विपरीते विरुद्धस्वभावे

विषूच्यौ भिन्नफले तत्र विद्यामिप्सुं नचिकेतसं त्वामहं मन्ये यतो मद्दत्तकामानत्वाममचालयन्त ॥ ४ ॥

निन्दत्यविद्यामिप्सुमविद्यायामिति—

**अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितंमन्यमानाः । दंद्रम्यमाणाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः ॥ ५ ॥**

ये मूढा अविवेकिनः अविद्यायां तत्रापि न प्रान्ते किन्त्वन्तरे मध्ये प्राप्ताः ते वस्तुतो बुद्धिपाण्डित्यहीना अपि स्वेनैव बुद्धिमन्तः पण्डिताश्च सन्तोऽतिकुटिलगतयस्सर्वतो भ्रमन्ति अन्धानुगा यथान्धास्तथा ॥५॥

**नसाम्परायः प्रतिभाति बालं**

प्रमाद्यन्तं वित्तमोहेन मूढम्
अयं लोको नास्ति पर इति
मानी पुनः पुनर्वशमापद्यते
मे ॥ ६ ॥

ईदृशं बालमज्ञं प्रमाद्यन्तं विषयासक्तं धनलोभेनाविवेकिनंप्रति साम्परायः परलोको न भाति तथाचायं लोकोस्ति परलोको नास्तीति मानी सः पुनः पुनर्मे मृत्योर्वशं याति ॥ ६ ॥

आत्मरूपपरलोकस्य दुर्लभतामाह
श्रवणायापीति—

श्रवणायापि बहुभिर्यो न
लभ्यः शृण्वन्तोपि बहवोयं न
विद्युः आश्चर्यो वक्ता कुशलो-

स्य लब्धाश्चर्यो ज्ञाता कुश-
लानुशिष्टः ॥ ७ ॥

वहूनान्त्वात्मश्रवणमपि दुर्लभम् शृण्वतस्वपि बहूनां तज्ज्ञानं दुर्लभमित्यर्द्धभावः अस्यात्मनो वक्ता कुशलः प्रवीणो लब्धा अस्तीतिनिश्चेता प्रवीणेनोपदिष्टस्सन् ज्ञाता साक्षात्कर्ता त्रयोप्याऽश्चर्या विरला एव सन्ति ॥ ७ ॥

न नरेणावरेण प्रोक्तएषसु-
विज्ञेयो वहुधा विचिन्त्यमानः
अनन्यप्रोक्ते गतिरत्र नास्त्य-
णीयान्ह्यऽतर्क्यमणुप्रमाणात् ॥

तस्मादवरेणाऽकुशलेन प्रोक्त एष आत्मा न ज्ञायते कीदृशः अप्रवीणैरनेकविधः कल्पितोतश्च अन्याऽनुपदिष्टेत्रात्मनि गति-

ज्ञानं नास्ति न जायते हि यतोणुप्रमाणाद-
प्यत्यणुरात्माऽतर्क्यः स्वतस्तर्केणानिश्चेय:॥

एतद्द्रढयन्प्रोत्साहयति नेति—

नैषा तर्केण मतिरापनेया प्रो-
क्तान्येनैव सुज्ञानाय प्रेष्ठ या-
न्त्वमापः सत्यधृतिर्वतासि त्वा-
दृङ्नो भूयान्नचिकेतः प्रष्टा ॥

हे प्रेष्ठातिप्रिय यान्त्वमापः प्राप्तवानेषा मतिर्विना गुरुं तर्केण केवलबुद्धिबलेननाऽऽप नीया प्रापणीया किन्त्वन्येनात्मज्ञेनैव प्रोक्ता सती सुज्ञानाय भवति वतेति हर्षे हे नचिकेतस्त्वन्तु सत्यधृतिरात्मविषयकत्वात्सत्यधारणावानासि ततस्त्वादृशः प्रश्नकर्तान्योपि नोस्मभ्यं भवतु ॥ ९ ॥

जानाम्यहं शेवधिरित्यनि-
त्यं नह्यऽध्रुवैः प्राप्यते हि ध्रुवं

**तत् ततो मया नाचिकेतश्चि-तोऽग्निरनित्यैर्द्रव्यैः प्राप्तवान-स्मि नित्यम् ॥ १० ॥**

शेवधिर्निधिरनित्योऽनित्यैश्च नित्यं तदा-त्मवस्तु नहि नैव प्राप्यते इत्यहं जानामि हि यतस्ततोऽनित्यैर्द्रव्यैर्नाचिकेतोऽग्नि-श्चितो मया तेन नित्यं बहुकालस्थाप्यम-रपदं प्राप्तोऽस्मि ॥ १० ॥

त्वं मादृशो नेत्याह कामस्येति—

**कामस्याप्तिं जगतः प्रतिष्ठां क्रतोरनन्त्यमभयस्य पारम् स्तोममहदुरुगायं प्रतिष्ठां दृ-ष्ट्वा धृत्या धीरो नचिकेतोऽत्य-स्राक्षीः ॥ ११ ॥**

सर्वकामनाप्राप्तिरूपाम् यत्प्राप्तौ न पुनः कामनेति भावः जगदाश्रयरूपाम् क्रतोर्यज्ञस्योपासनायावायतो न पुनरन्त्यं फलं तत्परमफलम् अभयस्यपारं परावधिः स्तोमं स्त्युत्यं च तन्महद्वस्तु च तद्रूपाम् उरुगायं महत्पदरूपाम् आत्मनः प्रतिष्ठां स्थितिं सत्यतात्मकध्रुवतां दृष्ट्वा जातधृत्या धीरस्त्वं तु हे नचिकेतः सकलैहिकामुष्मिकभोगांस्त्यक्तवान् ॥ ११ ॥

जिज्ञासां द्रढयन्नात्मज्ञानफलमाह तमिति—

**तं दुर्दशं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति ॥१२॥**

चित्तात्माकारतारूपाध्यात्मयोगस्य लाभेन तं त्वादिष्टमात्मानं देवं मत्वा धीमा-

न्हर्षशोकौ त्यजाति तत्राभावात्तयोरिति भावः कीदृशम् दुःखेन ज्ञेयम् अत्र हेतुचतुष्टयम् गूढं छन्नम् सर्वानुस्यूतम् बुद्धिर्गुहातत्र प्रतिबिम्बितम् गह्वरेष्ठम् दुर्गमदेशे स्थितम् ॥ १२ ॥

**एतच्छ्रुत्वा संपरिगृह्य मर्त्यः प्रवृह्य धर्म्यमणुमेतमाप्य स-मोदते मोदनीयꣳहि लब्ध्वा विवृतं सद्म नचिकेतसं मन्ये ॥**

मर्त्यः धर्म्यं सर्वधर्मात्मकमेतदात्मवस्तु श्रुत्वा निश्चित्य प्रवृह्य निदिध्यासनविषयतां वृद्धिं प्रापयित्वाणुं सूक्ष्ममात्मानं साक्षात्कृत्य हर्षदमात्मानमात्मत्वेन लब्ध्वा समर्त्यो हि निश्चयेन मोदते एतदात्मवस्तु सद्म गृहं नचिकेतसं त्वां प्रति विवृतं निष्कपाटद्वारमहं मन्ये तद्योग्योसीति भावः ॥

एवं चेत्तदुपदिशेत्याह नाचिकेता अन्यत्रेति—

अन्यत्र धर्मादन्यत्राधर्मा-
दन्यत्रास्मात्कृताकृतात् अ-
न्यत्र भूताच्च भव्याच्च यत्तत्प-
श्यसि तद्वद ॥ १४ ॥

धर्माधर्मफलतः कृताकृतात्कार्यकारणतः भूतभविष्यतश्च अन्यत्रान्यत् यत् तत्परिपूर्णं त्वं पश्यसि तद्वद ॥ १४ ॥

मृत्युरुवाच सर्वे इति—

सर्वे वेदा यत्पदमामनन्ति
तपाꣳसि सर्वाणि च यद्वद-
न्ति यदिच्छन्तो ब्रह्मचर्यं च-
रन्ति तत्ते पदं सङ्ग्रहेण ब्रवी-
म्योमित्येतत् ॥ १५ ॥

वेदतपोब्रह्मचर्याणि साक्षात्परम्परया वा यत्पराणि तत्पदं प्राप्य सङ्क्षेपेण ते तुभ्यमहं ब्रवीमि ओम् इति यत् एतदेव तत्पदम् ॥ १५ ॥

एतदेव स्फुटयति एतदिति—

**एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम् एतद्ध्येवाक्षरं ज्ञात्वा योयदिच्छति तस्य तत् ॥१६॥**

यः परब्रह्मज्ञानायोङ्कारं वाचकतया परं ब्रह्मेति जानाति तस्य तज्ज्ञानम् यश्चापर ब्रह्महिरण्यगर्भप्राप्तीच्छयोङ्कारं तद्रूपेण ध्यायति तस्य तत्प्राप्तिर्भवति ॥ १६ ॥

**एतदालम्बनꣳ श्रेष्ठमेतदालम्बनं परम् एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते ॥**

एतदोमित्यक्षरं श्रेष्ठमालम्बनं ब्रह्मोपासनप्रतीकम् पुनः परमुत्कृष्टमालम्बनं परब्रह्मबोधकम् एवमेतज्ज्ञात्वाऽपरब्रह्मणो लोके परब्रह्मरूपलोके ब्रह्मद्वयरूपस्सन्पूज्यते उक्त पद्यत्रयं नातिभिन्नार्थम् ॥ १७ ॥

अथ पृष्टात्मस्वरूपं निरूपयति नेति—

**न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित् अजो नित्यः शाश्वतोयं पुराणो न हन्यते हन्यमाने शरीरे ॥ १८ ॥**

अयमात्मा जननमरणक्रियाशून्यः विपश्चित् विद्वानज्ञानहीनः कुतश्चित्कारणात्कश्चिदन्यरूपः कदाचिन्न बभूव अतो जो नित्यश्च शाश्वतोपक्षयरहितः पुरापि नव

एवेति पुराणो वृद्धिरहितः नातश्शस्त्रादि-
भिर्देहे हते हन्यते ॥ १८ ॥

**हन्ता चेन्मन्यते हन्तुꣳ हतश्चेन्मन्यते हतम् उभौ तौ न विजानीतो नायꣳ हन्ति न हन्यते ॥ १९ ॥**

एवं चान्यं हन्तुमात्मानं चेद्यदि हन्तारं मन्यते योहन्तायश्च हतोन्येन चेदात्मानं हतं मन्यते तावुभौ नात्मज्ञौ यत आत्मा क्रियासम्बन्धशून्यः ॥ १९ ॥

कुत एवमात्मा तत्राहाणोरिति—

**अणोरणीयान्महतो महीयानात्मास्य जन्तोर्निहितो गुहायाम्। तमक्रतुः पश्यतिवीत-**

शोको धातुप्रसादान्महिमान-
मात्मनः ॥ २० ॥

सूक्ष्मादप्यतिसूक्ष्मो महतोप्यतिमहाना- त्मा स च सर्वगत्वात्सर्वजन्तुहृदये स्थितः आकाश इव घटे कथन्तर्हि ज्ञेयस्तत्राह त- मिति पूर्वं यो क्रतुराऽऽत्माऽतिरिक्तकामना- शून्यः ततो वीतजगद्वासनः ततो धातुप्र- सादाद्‌हृदयनैर्मल्यादात्मनस्तं महिमानमु- क्तविधं रूपं पश्यति सः ॥ २० ॥

नेदृशः कोपि स्यादित्यसम्भवं वारयत्यासीन इति—

आसीनो दूरं व्रजति शया-
नो याति सर्वतः कस्तं मदामदं
देवं मदन्यो ज्ञातुमर्हति ॥२१॥

उपविष्टः सुप्तोनिश्चल एव सन्मन आद्यु- पाधिप्रतिबिम्बेन दूरं व्रजतीव व्यापित्वा-

स्सर्वेत्रयातीव योतो मदामदं हर्षाहर्षौभय-रूपं हर्षरूपं वातमात्मदेवं मदन्यः को ज्ञाता विरल इति भावः ॥ २१ ॥

नाफलमात्मज्ञानमित्याहाशरीरमिति—

**अशरीरं शरीरेष्वनवस्थेष्व-**
**वस्थितम् महान्तं विभुमात्मा-**
**नं मत्वा धीरो न शोचति॥२२॥**

अनित्यसकलदेहेषु शरीरासङ्गि नित्यम् नाद्रिमिव महान्तं किन्तु विभुं व्यापकमेकमात्मानं स्वस्वरूपं निश्चित्य धीमान्नखिलशोक-शून्यो भवति ॥ २२ ॥

आत्मज्ञानस्य हेत्वहेतू आह नायमिति—

**नायमात्मा प्रवचनेन लभ्यो**
**न मेधया न बहुना श्रुतेन यमे-**
**वैष वृणुते तेन लभ्यस्तस्यैषआ-**
**त्मा वृणुते तनूं स्वाम्॥ २३ ॥**

अयमुक्तविध आत्मा वेदाभ्यासेन धारणशक्तयाधिया वहुनाधीतेन च न लभ्यते किन्तु भजनेन प्रसन्न ईश्वरस्वरूपं एष आत्मा यं वृणुते नु गृह्णाति तेन लभ्यते कथं तत्राह तस्य भक्तस्यैष शारीर आत्मास्वां शुद्धचित्ततनूं स्वीकरोत्ययमस्मीति ॥ २३ ॥

आत्मज्ञानविरोधिन आह नेति—

**नाविरतोदुश्चरितान्नाशान्तो नासमाहितः नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात् ॥**

कुकर्मादनिवृत्तः अशान्तो विषयैराकृष्टेन्द्रियः असमाहितो नैकाग्रचित्तः अशान्तमानसः सकामैकाग्रचित्तो वा न धियात्मानमाप्नोति ॥ २४ ॥

प्रकारान्तरेणैतदेवाह यस्येति—

**यस्य ब्रह्म च क्षत्रं च उभे**

**भवतओदनः मृत्युर्यस्योपसे-
चनं क इत्थावेद यत्र सः।२५॥**

जगत्कारणधर्माधर्मयोर्निरूपणपालने वि-
प्रक्षत्रियकर्मणी यस्याचिदात्मन ओदनस्था-
नीये भक्ष्ये सर्वभक्षको मृत्युश्चोपसेचनं शा-
कस्थानीयः सर्वलयाधारइतियावत्सचिदा-
त्मा यत्र निजशुद्धचिद्रूपे सदास्ति तच्छु-
द्धरूपं कोदुश्चरितादिमानित्थेत्थमिदमित्थ-
मिति कृत्वा वेद न कोपीति भावः ॥२५॥

इति द्वितीयवल्ली ।

तद्वेदनसुगमोपायं निरूपयिष्यन्वेतृवेद्यभेदं
प्रकल्पितं दर्शयति ऋतमिति—

**ऋतं पिबन्तौ सुकृतस्यलोके
गुहां प्रविष्टौ परमे परार्द्धे । छा-
यातपो ब्रह्मविदो वदन्ति प-
ञ्चाग्नयो ये च त्रिणाचिकेताः ॥**

छाया प्रतिबिम्ब आतपो विम्बस्तौ सगुणनिर्गुणावात्मानौ गुहां हृदये परमे उत्कृष्टे परार्द्धे ऽसङ्गस्वस्वरूपार्द्धे च क्रमेण प्रविष्टौ निर्विशेषात्मनि सप्रपञ्चनिष्प्रपञ्चत्वाद्धत्वे च कल्पितेबोध्ये कीदृशौ लोके कृतस्य कर्मणः ऋतं सत्यं सारांशफलं पिबन्तौ निर्गुणस्य कर्मफलभोक्तृत्वोक्तिस्त्वविवेकिदृष्ट्याप्रातीतिकी ब्रह्मविदः ये च पञ्चाग्निविद्योपासकाः ये च त्रिवारं चितनाचिकेताग्निकाः कार्मिणः सर्वे ते इति वदन्ति ॥ १ ॥

छायात्मनो लौकिकालौकिकोभयसाधनं यथा प्रज्ञं कार्यमित्याह य इति—

**यः सेतुरीजानानामक्षरं ब्रह्म यत्परम् अभयन्तितीर्षतां पारं नाचिकेतं शकेमहि ॥२॥**

ईजानानां यागं कुर्वतां दुःखोल्लङ्घनार्थ-

त्वात्सेतुरिव यस्तंनाचिकेताग्निम् अभयं संसारपारं तितीर्षतां प्राप्तुमिच्छतां परमक्षरं यद्ब्रह्म तच्चज्ञातुं शकेमाहि समर्थावयम् यथाधिकारमुभयज्ञानं कर्तव्यमस्तीति भावः ॥

जगति मोक्षे च गमनाय रथादिकल्पयत्यात्मानमिति—

**आत्मानं रथिनं विद्धि शरीरं रथमेव तु । बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥३॥**

छायात्मा रथी रथस्वामी शरीरं रथः बुद्धिः सारथिरश्वानां निश्चितमार्गप्रेरकः मनः प्रग्रहो श्वाकर्षणरज्जुः ॥ ३ ॥

**इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् । आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ॥ ४ ॥**

इन्द्रियाण्यश्वाः शब्दादिविषयागोचरामार्गाः देहेन्द्रियमनोयुक्त आत्मा भोक्तासंसारी न निरुपाधिक इति भावः ॥ ४ ॥

रथिनस्सुखेनेष्टदेशप्राप्त्यप्राप्तीसदसदश्वसारथ्यधीने आह यस्त्विति—

यस्त्वविज्ञानवान्भवत्ययुक्तेन मनसा सदा तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः ॥ ५ ॥

सदसन्मार्गाश्वनियमनविवेकहीनाऽगृहीताश्वरज्जुसारथेर्यथा नदुष्टाश्वा वशं यान्ति एवं यो बुद्धिसारथिरप्युक्तविवेकशून्यो नाकृष्टमनसा युतस्सदास्ति तस्येन्द्रियाणि न वश्यानि ॥ ५ ॥

यस्तु विज्ञानवान्भवति यु-

क्तेन मनसा सदा तस्येन्द्रि-
याणि वश्यानि सदश्वा इव
सारथेः ॥ ६ ॥

यस्तु स्वकर्मकुशलस्तस्य वश्यानीत्यादि
स्फुटम् ॥ ६ ॥

उक्ताद्विविधबुद्ध्योः फलमाह यस्त्वित्यादिना—

यस्त्वविज्ञानवान्भवत्यमन-
स्कः सदाऽशुचिः न स तत्पद-
माप्नोति संसारं चाधिगच्छति॥

पूर्वसारथिस्त्वशुद्धोतस्तदुक्तं परमक्षरं
पदं न प्राप्नोति किन्तु संसारमेव ॥ ७ ॥

यस्तु विज्ञानवान्भवति स
मनस्कः सदाशुचिः स तु त-
त्पदमाप्नोति यस्माद्भूयो न
जायते ॥ ८ ॥

द्वितीयस्तु शुद्धोतो यस्मादाप्तपदान्न पुनरिहोत्पद्यते तत्पदमुक्तं प्राप्नोति ॥ ९ ॥

तत्पदमेव संसारस्य पारं विष्णुपदं चेत्याह विज्ञानेति ।

**विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः सोऽध्वनः पारमाप्नोति तद्विष्णोः परम पदम् ॥**

यो नरो विवेकिसारथिमनोनिग्रहस्तश्च स संसारपारं याति तच्च पारं विष्णोर्ब्रह्मण उत्कृष्टं स्वरूपम् ॥ ९ ॥

परमेव पारमिति तत्पदस्य सर्वतः परत्वमाहेन्द्रियेभ्य इति—

**इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः॥१०॥**

परत्वं स्वावधिद्वारोपलभ्यत्वम् अर्था वि-
षयास्ते चेन्द्रियद्वारोपलभ्यन्ते विषयद्वारा-
विषयि मनः मनसा मनसो निश्चायिका
नियामिका धीः धिया च सर्वधीव्यापक-
त्वेनात्मा महान्पूज्यस्सर्वधीनियामकोन्त-
र्यामी ॥ १० ॥

**महतः परमव्यक्तमव्यक्ता-
त्पुरुषः परः पुरुषान्न परं कि-
ञ्चित्सा काष्ठा सा परा गतिः ॥**

तेन तदुपाधिभूतं संसारप्रसवोन्मुखं चि-
च्छक्तिरूपमव्यक्तम् तेन पूर्णत्वात्पुरुषः श-
क्तेरधिष्ठानभूतश्चेतनः तेन च न किञ्चिद-
न्यल्लभ्यमभावादेवान्यस्य अतश्चिदेव वस्तु
नः परमसीमाप्राप्यस्य च ॥ ११ ॥

पुरुषश्चेत्कुतो न लभ्यते कथं वा
लभ्येतात आहैष इति—

**एष सर्वेषु भूतेषु गूढोऽऽत्मा**

न प्रकाशते दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥ १२ ॥

एष आत्मा चराचरेषु तत्तदाकारव्यापारैरज्ञकल्पितैर्गूढो नाभिव्यक्त इवातो न प्रकाशते सर्पादिदृग्भीरज्जुरिव विवेकिभिस्तु निर्मलतयोत्तमया सूक्ष्मया च बुद्ध्यैष आत्मा दृश्यत एव ॥ १२ ॥

कथमत आह यच्छेदिति—

यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि ॥ १३ ॥

विवेकी वाचमिन्द्रियाणि मनसि लीनानि कुर्यात् मनसोतिरिक्तानि न भावयेत् एव-

मग्रेपि तन्मनः ज्ञाने आत्मनि ज्ञानात्मिकायां बुद्धौ धियं महत्यात्मनि मायोपाधिके तज्ज्ञानलयाधिकरणं सस्वपाधि शान्ते सर्वलयाधिष्ठानतया निर्विशेषे चिदात्मनि लयेत् ॥ १३ ॥

यद्यप्येवं सूक्ष्मदर्शिभिर्दृश्य आत्मा तथापि न दुर्गोमार्गस्तदभिज्ञोपदेशमन्तरेण सुखद इति सूचयति उत्तिष्ठेताति—

उत्तिष्ठत जाग्रत प्राप्य वरान्निवोधत क्षुरस्य धारा निशितादुरत्यया दुर्गं पथस्तत्कवयो वदन्ति ॥ १४ ॥

शक्य आत्मा द्रष्टुं यतोतो हे मुमुक्षव-उत्तिष्ठत विषयांस्त्यजत वरांस्तत्वज्ञान् गुरून्प्राप्यात्मानं जानीत तेन ज्ञानेन जाग्रताज्ञाननिद्रानाशं कुरुत शक्य आलस्यम-

नर्हामितिभावः निशिता तीक्ष्णा क्षुरधारा यथा दुरत्यया दुराक्रम्या तथा तत्तमुक्तमात्मज्ञानस्य पन्थानं विषयत्यागात्मकं दुर्गम्यं वदन्ति ॥ १४ ॥

किंवात्यन्तदुःखनिवृत्तये सह्यमप्यऽल्पदुःखमतः फलमाहाशब्दमिति—

अशब्दमस्पर्शमरूपमव्ययं
तथाऽरसं नित्यमगन्धवच्च यत्।
अनाद्यनन्तं महतः परं ध्रुवं
निचाय्यतं मृत्युमुखात्प्रमुच्यते ॥ १५ ॥

शब्दादि पञ्चविषयास्पृष्टमतोऽव्ययमक्षीणमतोनित्यमाद्यन्तरहितं महतस्सोपाधिकात्परमसंस्पृष्टं शुद्धं यद्ब्रह्मतत्त्वं ध्रुवमेकरसं तत्तमात्मानं निचाय्य ज्ञात्वा न मृत्युमाप्नोति कदापि ॥ १५ ॥

एतद्वल्लीत्रयपाठादि फलमाह नाचिकेतमिति—

नाचिकेतमुपाख्यानं मृत्युप्रोक्तं सनातनम् उक्त्वा श्रुत्वा च मेधावी ब्रह्मलोके महीयते॥

यमप्रोक्तं नचिकेतःसबन्धि वद्त्वेन सनातनमिदमुपाख्यानं श्रावयित्वा श्रुत्वा वा मेधावी दिव्यबुद्धिस्सन् हिरण्यगर्भलोके पूजितो भवति ॥ १६ ॥

य इमं परमं गुह्यं श्रावयेद्ब्रह्म संसदि, प्रयतः श्राद्धकाले वा तदा नन्त्याय कल्पते तदानन्त्याय कल्पते इति॥१७॥

किंच अतिगोप्यमिमं ग्रन्थं ब्राह्मणसमाजे श्राद्धकाले भुञ्जानेषु ब्राह्मणेषु वा प्रयतः शुचिर्यतचित्तेन्द्रियो वा सन् यः

श्रावयेत्स तच्छ्राद्धं चानन्तफलाय समर्थं भवति वीप्साध्यायसमाप्तये ॥ १७ ॥

इति तृतीयवल्ली ।

---

प्रथमोऽध्यायश्च ।

अथ प्राप्यवरान्निबोधतेति सूचितबोध्यात्मानं विशेषतो निर्णेष्यन्नशब्दमित्याद्युक्तिफलितचक्षुराद्यग्राह्यत्वं तावदात्मनस्स्फुटयति पराञ्चीति ॥ १ ॥

**पराञ्चि खानि व्यतृणत्स्वयम्भूस्तस्मात्पराङ्पश्यति नान्तरात्मन् कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन् ॥ १ ॥**

स्वयंभूरीश्वरः पराञ्चि परमनात्मवस्तु तत्र गमनस्वभावानि खानीन्द्रियाणि व्य-

तृणाद्धिंसितवान् उक्तस्वभावसत्ता प्रदानमेव हिंसा ततः पराङ् वाह्यान्विषयानेव पश्यति जनोनान्तरात्मानम् मोक्षमिच्छन् धीरोविषयेभ्य इन्द्रियाकर्षणेनुद्विग्नस्वभावो विषयव्यावृत्तेन्द्रियः कश्चिद्विरलः आन्तरात्मानमैक्षत्पश्यति ॥ १ ॥

अधीरदोषदर्शनेनधीरेण भवितव्यमिति सूचयन्नुक्तमेव विषदयाति परा च इति—

**पराचः कामाननुयन्ति वालास्ते मृत्योर्यन्ति विततस्य पाशम् अथ धीरा अमृतत्वं विदित्वा ध्रुवमध्रुवेष्विह न प्रार्थयन्ते ॥ २ ॥**

ये वाला अज्ञा अविवेकिनो वाह्यविषयानिच्छन्ति ते विततस्यासङ्ख्यस्य मृत्योः पाशं जन्म प्राप्नुवन्ति अथ तस्माद्धीरा

इह जगत्यनित्यपदार्थेषु सर्वेषु मध्ये मोक्षमेव नित्यं मत्वा न मुक्त्यन्यदिच्छन्ति ॥२॥

अमृतपदेन विवक्षितचिदात्मानमध्रुवेषु आह्वयति येनेति ।

येन रूपं रसं गन्धं शब्दान्स्पर्शांश्च मैथुनान् एतेनैव विजानाति किमत्र परिशिष्यते एतद्वैतत् ॥ ३ ॥

रूपादीन् मैथुनं स्त्रीसंभोगस्तन्निमित्तकसुखस्पर्शांश्च येन बोधेन स्पष्टं सदा जानाति तच्च ज्ञानमेतेनात्मनैव बोध एवात्मा केवल इति भावः एवं चात्र जगति किमज्ञेयं तस्माज्जगदध्रुवं ध्रुव आत्मेति भावः तन्नचिकेतसा पृष्टमात्मस्वरूपमेतद्बोधात्मकमेव ॥ ३ ॥

प्रकारान्तरेणाह स्वप्नान्तमिति—

स्वप्नान्तं जागरितान्तं चोभौ येनानुपश्यति महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥ ४ ॥

जाग्रत्स्वप्नयोस्सन्धिद्वयं येनानुभवति जनः तं महान्तमपरिच्छिन्नं विभुं चेतनमात्मानं स्वस्वरूपं साक्षात्कृत्य धीरः शुद्धधीर्न शोचति ॥ ४ ॥

एवंविधश्च निर्भयो भवतीत्याह य इति—

य इमं मध्वदं वेद आत्मानं जीवमन्तिकात् ईशानं भूतभव्यस्य न ततो विजुगुप्सते । एतद्वैतत् ॥ ५ ॥

यः मध्वदं विषयसुखस्यभोक्तारं जीवं चिदाभासमिममात्मानम् भूतभव्यस्यातीतानागतसर्वजगतोन्तिकादीशानं सर्वत्र सत्तया नियामकमन्तर्यामिणं नत्वैकदेशस्थ्येन दूरतः वेद सततो वेदनादनन्तरं वा नात्मानं भयेन केनचिद्गोपायितुमिच्छति अनीशोहीशभयाद्विजुगुप्सते इति भावः एतद्वैतदिति सर्वमुक्तार्थम् ॥ ५ ॥

अनन्तरोक्तमन्यविधयाह यः पूर्वमिति—

**यः पूर्वं तपसोजातमद्भ्यः पूर्वमजायत गुहां प्रविश्य तिष्ठन्तं यो भूतेभिर्व्यपश्यत । एतद्वैतत् ॥ ६ ॥**

य ईशानः सृष्ट्यादौ स्रष्टव्यविषयकज्ञानरूपतपसः पूर्वं जातं जातस्सिद्धो बोधमात्रोतएवाद्भ्योभूतेभ्यश्च तमेव गुहामन्तः

करणं प्रविश्य भूतेभिर्भूतभौतिकैस्सह ति-
ष्ठन्तं यो विपश्यति स एवात्मानं पश्यति ॥

भङ्ग्यन्तरेण पुनश्चितमात्मानमाह या
प्राणेनेति—

**या प्राणेन संभवत्यदितिर्दे-
वतामयी गुहां प्रविश्य तिष्ठ-
न्तीं या भूतेभिर्व्यजायत। ए-
तद्वैतत् ॥ ७ ॥**

देवतामयीद्योतनात्मिकाऽदितिरखण्डा-
चित् प्राणरूपेणोत्पद्यते यैव च भूतभौति-
करूपैर्व्यजायतोत्पन्ना तामेव गुहां प्रविश्य-
जीवरूपेण तिष्ठन्तीं यः पश्यति स पश्यति
निजात्मानम् ॥ ७ ॥

सत्सेऽव्यतयोपस्थिताग्निदेवतां वर्णयति चि-
त्वायारण्योरिति ।

**अरण्योर्निहितो जातवेदा**

गर्भ इव सुभृतो गर्भिणीभिः दिवेदिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः । एतद्वै-तत् ॥ ८ ॥

यत्काष्ठयोर्मन्थनेन व्यज्यतेऽग्निस्तयोररण्योः स्थितो जातवेदायज्ञियाग्निर्गर्भिणीभिर्गर्भ इव जागृवद्भिस्सावधानैर्हविर्युक्तैर्याज्ञिकैर्दिने दिने सुभृतस्सुरक्षितः पोषितो वेड्यस्तुत्यश्चयः यश्चेतरमनुष्यैरग्निस्साधारणोऽग्निस्तथा सुभृतस्तद्रूपोऽपि चिदात्मैव ॥

सर्वरूपतामाह चिदात्मनो यतश्चेति—

यतश्चोदेति सूर्योऽस्तं यत्र च गच्छति तं देवास्सर्वे अर्पितास्तदु नात्येति कश्चन । एतद्वैतत् ॥ ९ ॥

यतश्चिदात्मनस्सूर्यो जायते लीयते च यत्रात्मनि तं चिदात्मानं प्रत्यर्पितास्सर्वदेवाः किं बहुना कोपि पदार्थस्तदात्मस्वरूपं नाऽत्येत्युल्लङ्घयति तदन्यो न भवतीति भावः ॥ ९ ॥

अनन्यदृष्टिसिद्धयेऽन्यदृष्टौ भयमाह यदेवेहेति—

**यदेवेह तदमुत्र यदमुत्र तदन्विह मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥ १० ॥**

इह जगति यदेव वास्तवं वस्तु तदेवात्मनि यच्चामुत्रात्मनि तदेवाध्यात्मविचारमनुजगति यद्धेमकटकादौ तद्धेम्नि यद्धेम्नि तद्धेमयथा प्रपञ्चात्मना ह्यपरोक्षमेव तद्वस्त्विति यदमुत्रेत्युक्तिर्न द्वैतामिति भावः स्फुटमन्यत् ॥ १० ॥

कथमेवं च कटकादाविव न चक्षुरादिविषयता-
त्मनीत्यत आह मनसैवेति—

**मनसैवेदमाप्तव्यं नेह नाना-
स्ति किञ्चन मृत्योः स मृत्युं
गच्छति य इह नानेव पश्यति॥**

गन्धो घ्राणेनैवेव मनसैव निर्मलेनेदमा-
त्मवस्तु गृह्यते ऽतोविकृतदृशापीतोपि सि-
तएव शङ्खस्तथेह न नानाऽतोनानेव पश्य-
न्नानामृत्युमृच्छति ॥ ११ ॥

जगताऽभेदमुक्त्वा परमात्मनातमात्मनो
दृढयन्पुनराहाङ्गुष्ठमात्र इति—

**अङ्गुष्ठमात्रः पुरुषो मध्य
आत्मनि तिष्ठति ईशानं भूत-
भव्यस्य न ततो विजुगुप्सते।
एतद्वैतत् ॥ १२ ॥**

आत्मनि शरीरे मध्ये हृदाकाशेऽङ्गुष्ठमात्रे भासनादङ्गुष्ठमात्रो यः पुरुषो वस्तुतः पूर्णत्वादात्मा तं भूतभव्यस्येशानं मत्वेत्यादि पञ्चमे उक्तार्थम् ॥ १२ ॥

उक्तात्मनो निर्विकारतामाहाङ्गुष्ठेति—

**अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः ईशानो भूतभव्यस्य स एवाद्य स उ श्वः । एतद्वैतत् ॥ १३ ॥**

यो निर्धूमाग्निरिवोक्तः प्रकाशश्चिदात्मा स एवास्मिन्दिने श्वः परदिनेपि स एव नान्यस्तादृशोवा नित्योऽद्वयोनिर्विकारश्चेति भावः ॥ १३ ॥

पुनरभेदधीदार्ढ्यायाह यथेति—

**यथोदकं दुर्गे वृष्टं पर्वतेषु**

विधावति एवं धर्मान्पृथक्प-
श्यंस्तानेवानुविधावति ॥ १४ ॥

दुर्गेषु पर्वतेषु वृष्टं पतितं जलं विविधं नाना सत् नानानिम्नदेशान् गच्छति यथा तथात्मधर्मानात्मस्वरूपान् जगत्पदार्थान् पृथगात्मान्यत्वेन पश्यन्नानादर्शीनानाशरीरस्सँस्तानेव जगत्पदार्थाननुगच्छति प्रतिजन्माज्ञः ॥ १४ ॥

यथोदकं शुद्धे शुद्धमासिक्तं
तादृगेव भवति एवं मुनेर्विजा-
नत आत्मा भवति गौतम ॥ १५ ॥

शुद्धचिदात्मैकत्वमननशीलस्य विज्ञानिन आत्मा तु हे गौतमगोत्र नचिकेतः शुद्धचिदेकरस एव भवति यथा शुद्धजले आसिक्तं सर्वतः पतितं शुद्धजलं शुद्धैकरसमेव भवत्येवम् ॥ १५ ॥

इति चतुर्थवल्ली ।

अथातिसौक्ष्म्यादात्मनो विवेकाय प्रकारा-
न्तरमारभते पुरमिति—

**पुरमेकादशद्वारमजस्यावक्रचेतसः अनुष्ठाय न शोचति विमुक्तश्च विमुच्यते एतद्वैतत्॥**

यथा सर्वदेशस्याधिष्ठातुर्गन्तुश्च महाराजस्य प्रायो नियतोपलम्भाय पुरं विचित्रं क्रियते तथा जन्मादिविकारहीनस्यावक्राव्याहतपरिपूर्णचेतनस्य नाभिशिरोरन्ध्राभ्यामेकादशद्वारशरीरपुरमनुष्ठाय कृत्वा निश्चीय पुरसङ्गशून्यचिदात्मानं निश्चीयेति यावत् शोकबन्धौ नानुभवति ॥ १ ॥

चिदात्मनो जगदधिष्ठानत्वाभिव्यक्तये सर्व-
रूपतामाह हंस इति—

**हंसः शुचिषद्वसुरन्तरिक्ष-**

सद्धोतावेदिषदतिथिर्दुरोणसत्
नृषद्वरसदृतसद्व्योमसदब्जा गो
जा ऋतजाअद्रिजा ऋतं बृहत् ॥

हन्ति सदा गच्छतीति हंसस्सूर्यः शुचौ स्वर्गे सीदतीति शुचिषद्देवगणः वसति सर्वहृदि मनोहररूपत्वादिति वसुर्गन्धर्वगणः अन्तरिक्षे सीदतीति वायुः एवमग्रेप्यूह्यम् होताग्निःपृथिवीवासी ब्राह्मणो यज्ञगृहस्थः एवंविधैतत्स्वरूप आत्मैव पुनः मनुष्यस्थः देवस्थः सत्यस्थः आकाशस्थः पुनः क्रमेण जलधरायज्ञपर्वतजाताअप्यात्मैव तथाप्यात्मस्वरूपमृतमेकरसं बृहद्ब्रह्मनिर्विशेषमेव ॥

प्राणादिप्रेरकत्वेनात्मानं विविनक्ति ऊर्द्ध्वमिति—

ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति मध्येवामनमासीनं विश्वेदेवा उपासते ॥ ३ ॥

यो हृदयादूर्द्ध्वं प्राणाख्यवायुमुपर्य्यपानं च प्रत्यगधो नयति तं चिदाभासरूपेण मध्ये हृद्यासीनमुपविष्टं वामनं परिच्छिन्नं सर्वेदेवाश्चक्षुरादयस्सेवन्ते तत्परतन्त्रा इति यावत् अवश्यमेव जड़प्रेरय्यातिरिक्तेन चिदात्मना भवितव्यमिति भावः ॥ ३ ॥

आत्मावगमे विधान्तरमाहास्येति—

**अस्य विस्रंसमानस्य शरीरस्थस्य देहिनः देहाद्विमुच्यमानस्य किमत्र परिशिष्यते एतद्वैतत् ॥ ४ ॥**

पूर्वं शरीरस्थस्य देहाभिमानिनो भोगक्षये देहाद्विस्रंसमानस्य विमुच्यमानस्यान्यत्रगतस्यास्यचिदाभासस्यात्रशरीरे किं शिष्यते न किमपि किन्तु सहैव सकलं प्राणेन्द्रियादि तदीयं प्रयाति शिष्यते च यद्वैकं

वस्तु विम्बचेतनमेतदेव तन्नचिकेतसापृष्ट-मात्मतत्त्वम् ॥ ४ ॥

ननु मास्तु चिदाभासाख्यचेतनसम्बन्धाभ्यु-पगमः प्राणयोगायोगाभ्यामेव जीवन-मरणप्रसिद्धेरत आह नेति—

**न प्राणेन नापानेन मर्त्यो जीवति कश्चन इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ ॥**

निरुद्धप्राणापानयोगिचिरजीवनदर्शनान्न केवलप्राणापानाभ्यां जीवनम् किन्तु यदधीनावेतौ तेनेतरेणान्येन केनापि जडवाय्वादीनां नैयत्येनप्राणात्वादिव्यापारस्य योगायोगयोर्वाऽन्तरेण चेतनसम्बन्धमसम्भवाल्लोके दर्शनाच्चावश्यकस्तदभ्युपगम इति भावः ॥ ५ ॥

यथार्थभाषिताहेतुकप्रीतिमात्मनस्सूचयति यमो हन्तेति—

हन्त इदं प्रवक्ष्यामि गुह्यं ब्रह्मसनातनम् यथा च मरणं प्राप्य आत्मा भवति गौतम ॥

हन्तेदानीमिदमुक्तमपि ब्रह्म पुनस्ते वदिष्यामि मरणोत्तरं यथा पुनर्जायते जीवस्तथातावच्छृणु वैराग्यायेति भावः ॥ ६ ॥

जनिप्रकारं समासेनाह योजनमिति—

योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः स्थाणुमन्ये नु संयन्ति यथाकर्म यथाश्रुतम् ॥

अन्ये मूढ़ा देहिनो जीवाः शरीरभावाय शुक्ररूपेण योनिं विशन्ति अन्येतिमूढास्तु वीजरूपेण स्थाणुं स्थावरं वृक्षादि यथा यस्य

पूर्वकृतं कर्मश्रुतं वासना च तथा तदनुसारेणेति यावत् ॥ ७ ॥

वक्ष्यामीति प्रतिज्ञातमाह य इति—

य एष सुप्तेषु जागर्ति कामं कामं पुरुषोनिर्मिमाणः तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन एतद्वैतत् ॥ ८ ॥

य एष आत्मा पुरुषो जीवरूपः सुप्तेषु निद्राभिभूतेष्विन्द्रियादिषु सत्सुनानास्वाप्नपदार्थं रचयन् जागर्त्यविलुप्तबोधो भवति तदेव शुद्धं ब्रह्माविनाशिचोच्यते विम्बानतिरिक्तत्वात्प्रतिविम्बस्येति भावो न विम्बचिदन्यत्किञ्चिद्ब्रह्मेति यावत् तस्मिन्नित्यादि तुर्यवल्ली नवमवाक्ये उक्तार्थम् ॥ ८ ॥

आत्मैकत्वं निदर्शनेन बुद्धावारोहयत्यग्निरिति—

अग्निर्यथैको भुवनं प्रविष्टो
रूपं रूपं प्रतिरूपो वभूव ए-
कस्तथा सर्वभूतान्तरात्मा रूपं
रूपं प्रतिरूपो बहिश्च ॥ ९ ॥

वायुर्यथैको भुवनं प्रविष्टो रू-
पं रूपं प्रतिरूपो वभूव एक-
स्तथा सर्वभूतान्तरात्मा रूपं
रूपं प्रतिरूपो बहिश्च ॥ १० ॥

वस्तुतो व्याप्येक एवाग्निर्वायुश्चाऽवास्तवनिजौपाधिकजन्माधारं भुवनं दारुदेहाद्युपाधिं प्रविश्य तत्तदुपाधिरूपं प्रति प्रतिरूपस्सदृश उपाध्याकारोनानेव भवति यथा तथा सर्वभूतान्तर्वहिश्च स्थित एक एवात्मा देहान्तःकरणेषु प्रतिविम्बितः ॥ १० ॥

नन्वेवमौपाधिकं परमदुःखित्वादिस्यादेकपरमा-
त्मनोत आह सूर्य इति ।

सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः। एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः ॥

इन्द्रियाधिष्ठातृदेवेन रूपेणालोकेन वाखिलचक्षुर्गतोपि सूर्यो न कैरपि चक्षुस्सम्बन्धिदोषैः पापरोगादिभिस्सम्बधं यात्यऽतिसूक्ष्मा सम्बन्धिस्वभावरूपत्वात् तथा सर्वोपाधिवाह्यो संबद्धस्वभाव आत्मा औपाधिकरूपे प्रतीतमपि किञ्चिदवास्तवेन वस्तुस्वरूपं स्प्रष्टुमर्हति मरुं मरीचिकेवेति भावः॥११॥

अवास्तवे चिदाभास एवात्मनिश्चयी सदा
दुःख्येवेति सूचयति एक इति—

एको वशी सर्वभूतान्तरा-

त्मा एकं रूपं बहुधा यः करोति तमात्मस्थं ये नु पश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ॥ १२ ॥

अद्वैतः स्वरूपाधीनीकृताखिलाऽखिलान्तर्व्यापी यः एकं शुद्धचिन्मात्रं स्वरूपं जगदाकारं करोति मनःस्वप्नपदार्थानिव तमेवाभासात्मना हृदयस्थं जानन्ति ये तेषामेवानन्तसुखम् ॥ १२ ॥

नित्योऽनित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् तमात्मास्थं ये नु पश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम् ॥ १३ ॥

सर्वकार्याणां नित्यः कारणात्मा ब्रह्मादि चिदाभासानां चेतनस्साक्षीय एकोन्तर्यामी ब्रह्मादीनां कामानिष्टफलानि सम्पादयति तमित्याद्युक्तार्थम् तेषामेव शान्तिरुपरामो निर्वासनतानन्तसुखरूपयोग्यता ॥ १२ ॥

तच्चानन्तसुखमात्मभूतमपि न निर्देश्यमयं घट इति यथेत्याह तादिति—

**तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखम् कथं नु तद्विजानीयां किमु भाति विभाति वा ॥ १४ ॥**

तदुक्तं नचिकेतसा पृष्टं वापरमसुखस्वरूपमेतदात्मतत्त्वमनिर्देश्यमिति मन्यन्ते तज्ज्ञाः अतस्तदुवितर्के किं भाति सामान्यतः प्रकाशरूपं किं वा विभाति सूर्यादिप्रकाशविशेषस्वरूपं वेति कथं केन प्रकारेण नु

निश्चयेनाहं विजानीयां विज्ञापयेयमिति य-
महृदयानुसन्धानोक्तिः ॥ १४ ॥

लौकिकाखिलप्रकाशसाक्षिनिर्विशेषालौकिकप्रकाशरूपं तदिति तृतीयप्रकारेणाह नेति—

**न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोयमग्निः । तमेवभान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥ १५ ॥**

तत्र चिदात्मनि सूर्यादयो न भान्ति चिदात्मबोधनसमर्था न भवन्ति किन्तु चिदात्मानमेव पूर्वतः स्फुरन्तमनुपश्चात् तत्स्वरूपबोधप्रकाशेनाखिलं जगत्सामान्यतो विशेषतश्च प्रतीयते ॥ १५ ॥

इति पञ्चमवल्ली ।

अथानभिव्यक्तात्मबोधाय नानाप्रकारान् विवक्षुरादौ कार्यं कारणबोधकमित्याहोर्द्ध्वमिति–

**उर्द्ध्वमूलोऽवाक्शाखएषोऽश्वत्थः सनातनः तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते तस्मिंल्लोकाः श्रिताः सर्वे तदुनात्येति कश्चन एतद्वैतत् ॥ १ ॥**

एष दृश्यः प्रपञ्चोऽश्वत्थः पिप्पलतरुः नश्वस्तिष्ठतीति विनाशित्वसूचनाद्विष्णुरूपतोक्तेर्वाऽश्वत्थोक्तिः कीदृशः सनातनोऽनादिः अर्वागधःप्रत्यक्षालोकलौकिकरूपाःशाखा यस्य सः एतावता कार्यमिति फलितम् तथा चावश्यं कारणेनापि भाव्यमत आह ऊर्ध्वं परं यत ऊर्ध्वं न किञ्चित् तन्मूलं कारणं यस्य सः तत्किंतदाह तदेवेत्यादि तदुक्तार्थं पञ्चमवल्ल्यष्टमवाक्ये नाखिलजड़कारणताक

ल्प्यैकजड़े क्वचित्सम्भविष्यतीति भावः ॥

भयादिवेश्वराणां निरन्तरप्रवृत्तिरपि चित एवा-
खिलजड़कारणतां सूचयति लोकप्रसिद्धे-
रित्याह यदिदमिति—

यदिदं किञ्चजगत्सर्वं प्राण एजति निःसृतम् महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति ॥ २ ॥ भयादस्याग्निस्तपति भयात्तपति सूर्यः भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः ॥ ३ ॥

यदिदं किंच तत्सर्वं जगत् प्राणेसर्वचेष्टाहेतौ ब्रह्मण्येवनिःसृतमुत्पन्नमेजति चेष्टते च कथमेवम् यत उद्यतमुत्थापितं हननाय वज्रमिव भयं भयकारणं किंचिन्महदस्ति

महद्भयस्य महतां भयस्य कारणमिति वा एतदेव कुतः यतोग्न्यादयस्त्यक्तसर्वेष्टविश्रामाः स्वस्वव्यापारे प्रवर्तन्ते न ह्येतेषां च सम्भवति भयं जडादिति भावः अतएव च ये एतज्जगत्कारणं जानन्ति तेऽमृताः जडधर्मेण परमभयेन वा मरणेन हीना भवन्ति ॥

एतत्फलमपि मर्त्यलोक एवोक्तभयहेतु ब्रह्मबोधे सति भवति नान्यत्रेत्याहेहेति—

**इहचेदशकद्बोद्धुं प्राक्शरीरस्य विस्रसः ततः सर्गेषु लोकेषु शरीरत्वाय कल्पते ॥ ४ ॥**

इहात्र लोकेदेहस्य विस्रसः पातात्पूर्वं चेद्यद्युक्तचिदात्म ब्रह्म बोद्धुमशकत्समर्थोभवेज्जानीयादिति यावत् तदोक्तफलम् ततः शरीरपातोत्तरं तु तत्तल्लोकेषु तत्तत्सर्गेषु योनिषु शरीर लभते नोक्तफलम् ॥ ४ ॥

कुतस्तदाह यथेति—

यथा दर्शे तथात्मनि यथा स्वप्ने तथापितृलोके यथाप्सु परीव ददृशे तथा गन्धर्वलोके छायातपयोरिव ब्रह्मलोके॥५॥

यथा आदर्शे तथैवात्मनि देहे च मुखं दृश्यते न तु किञ्चिदप्यन्यथा तथेह लोके आत्मबोधो यथावत् अन्यत्र तु क्वचित्स्वप्न इवास्पष्टः क्वचिज्जले यथा परीव विपरीतमिव दृश्यते किञ्चित्तथा क्वचिच्छाया तेजसोरिव स्पष्टोपि भिन्नविषय एव सर्वथैकत्वबोधस्तु कस्यचिदेव तत्र अन्यत्राप्येव मूह्यमितीहैवयत्न आत्मबोध उचित इति भावः॥

देह आत्मबोधप्रकारमाहेन्द्रियाणामिति—

इन्द्रियाणां पृथग्भावमुदयास्तमयौचयत् पृथगुत्पद्य-

मानानां मत्वा धीरो न शोचति ॥ ६ ॥

यद्यस्मात्सुषुप्तिप्रबोधयोरुदयास्तमयो आविर्भावतिरोभावौ तस्मात्स्थूलदेहात्पृथगुत्पद्यमानानां प्रतीयमानानामिन्द्रियादीनामात्मनः पृथग्भावमन्यत्वमनात्मत्वं मत्वेत्यर्थः ॥ ६ ॥

आत्मात्वेकरसः सर्वतः पर

इत्याहेन्द्रियेभ्य इति—

इन्द्रियेभ्यः परं मनो मनसः सत्वमुत्तमम् सत्वादधिमहानात्मामहतोऽव्यक्तमुत्तमम् ॥ अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च । यं ज्ञात्वा

मुच्यते जन्तुरमृतत्वं च ग-
च्छति ॥ ८ ॥

विषयविषयिणोश्चार्थेन्द्रिययोरभेदेन नि-
र्देशः सत्वमत्र बुद्धिर्लिङ्गं लक्षणम् व्याख्या-
तमन्यतृतीयवल्ल्याम् तदन्यत्स्फुटमेव ॥८॥

अलिङ्गोप्यलिङ्गत्वेनैव बुध्यत इत्याह नेति—

न संदृशे तिष्ठति रूपमस्य
न चक्षुषा पश्यति कश्चनैनम्
हृदा मनीषा मनसाभिक्लृप्तो
य एतद्विदुरमृतास्ते भवन्ति॥

अस्यात्मनो रूपं दृष्टिविषये न तिष्ठत्य-
योग्यत्वादतो न कोऽपि पश्यति चक्षुषा किन्तु
बुद्धिमनोभ्यां सहितेन हृदा हृदयेनाभिक्लृ-
प्तोऽभिक्लृप्ताः समर्था ये एतदात्मतत्त्वं विदुः
अयं भावः न यावन्निर्विषयमनोबुद्धिभ्या-

मेकीभूतं भवति हृदयं न तावत्कोप्यात्मद-
र्शनशक्तो भवतीति ॥ ९ ॥

उक्तैकीभावमेव व्यक्तमाह यदेति—

**यदा पञ्चावतिष्ठन्ते ज्ञाना-
नि मनसा सह बुद्धिश्चनवि-
चेष्ठति तामाहुः परमां गतिम्॥**

यदा मुमुक्षोर्वैराग्यादिना पञ्चज्ञानेन्द्रि-
याणि मनोबुद्धिश्च स्वस्वव्यापारं विहाया-
ऽऽत्माभिमुखतया हृद्येव तिष्ठन्ति तामेवा-
वस्थां मुक्तिमाहुः ॥ १० ॥

वर्णयतीमामेवावस्थां तामिति—

**तां योगमितिमन्यन्ते स्थि-
रामिन्द्रियधारणाम् अप्रमत्त-
स्तदा भवति योगो हि प्रभ-
वाप्ययौ ॥ ११ ॥**

तामुक्तां स्थिरां दृढां चिरस्थायिनीमिन्द्रियाणां धारणामुपरातिं योगं योगिनो वदन्ति तदा तस्यामवस्थायां प्रमादरहितो भवति विक्षेपाभावात् योगो हि योग एव चोत्पत्तिप्रलयहेतुः सर्वेष्टसाधकः सर्वशक्तियोग इति भावः ॥ ११ ॥

ननूक्तावस्थायां नात्मप्रसिद्धिर्बुद्ध्याद्यविषयत्वेनानुपलभ्यमानत्वादत आह नैवेति—

**नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा । अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते ॥ १२ ॥**

यद्यप्ययोग्यत्वेन वागाद्यगोचर आत्मा तथापि सकलजागतपदार्थान्वयित्वेनास्तीदमिदं नास्तीत्यस्तिशब्दं ब्रुवतः अन्यत्र प्रकारान्तरे नैव तदात्मतत्त्वमुपलभ्यते॥१२॥

एवं चास्तीत्युक्तिप्रकारे एवोपलभ्यत इति फलितन्तदाहास्तीति—

अस्तीत्येवोपलब्धव्यस्तत्त्वभावेन चोभयोः । अस्तीत्येवोपलब्धस्य तत्त्वभावः प्रसीदति ॥ १३ ॥

घटादिकार्यान्वयित्वेन मृदादिकारणोपलम्भात्सकलकार्यान्वयिसद्रूपआत्मेत्याद्यपादभावः अस्तीति भात्याद्युपलणक्षम् किंचोक्तावस्थायामात्मनः केवलीभावो भवति तेनापि शुद्धबोध उपलभ्यते परंतूभयोर्मध्ये पूर्वं पूर्वप्रकारेण प्रतीतस्यात्मनः केवलीभावो भवति नान्यथा ॥ १३ ॥

आत्मोपलब्धिफलमाह यदेति—

यदा सर्वे प्रमुच्यन्ते कामा

येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥ १४ ॥

अस्य मुमुक्षोर्मर्त्यस्य हृदये वासनारूपेण ये कामा विषयाः स्थितास्ते यदा केवलीभावे हृदि न भवन्ति अथानन्तरमेव स मर्त्यो मुक्तो भवति देहावसानसमये च घटाकाशो महाकाशमिवात्रैव न क्वचिद्गत्वा ब्रह्माख्यशुद्धचेतनं व्याप्नोति तदेव सत्तद्भवति न भिन्नो भात्यज्ञानामिति भावः ॥ १४ ॥

ननु बन्धात्मकलिङ्गदेहस्य कथं विनाश इत्याशङ्क्य तन्मूलाविवेकनाशादित्याह यदेति—

यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः अथ मर्त्योऽमृतो भवत्येतावद्ध्यनुशासनम् ॥

हृदयस्थाश्चिज्जडाऽविवेकतत्प्रयुक्ताहन्त्वेदन्त्वसुखित्वकर्तृत्वादिग्रन्थयो वन्धा विवेकेन यदा नश्यन्ति तदोक्तफलं भवत्येवाऽसंशयम् शाखादीव कंचित्कालं स्थूलदेहारब्धकर्मान्तमेव तिष्ठति लिङ्गादीति भावः एतावदेवानुशासनमुपदेशः सिद्धान्तोखिलवेदान्तस्य ॥ १५ ॥

अप्राप्तकेवलीभावानां तु यथा वासनं नानाविधागतय इति सूचयति शतंचेति—

**शतं चैकाच हृदयस्य नाडयस्तासां मूर्द्धानमभिनिःसृतैका तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति ॥ १६ ॥**

हृद्गतमूलैकाधिकशतनाडीनां मध्ये एका मूर्द्धानमभिव्याप्य द्वादशाङ्गुलमुपरिगता

यास्ति तयोपरिगच्छन्नुपासको ब्रह्मलोकप्राप्तिरूपामृतत्वं लभते अथ सूक्ष्मदेहस्य निष्क्रमणे द्वारभूता अन्यनाड्यस्तु विष्वङ् विषूच्यः क्षुद्रनानागतिहेतवो भवन्ति ॥१६॥

तस्मादात्मावश्यं विधेयः केवलीभाव इत्यु... संहरति अङ्गुष्ठमात्र इति—

अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः तं स्वाच्छरीरात्प्रवृहेन्मुञ्जादिवेषीकां धैर्येण विद्याच्छुक्रममृतं तं विद्याच्छुक्रममृतमिति ॥ १७ ॥

...दा सर्वजनहृदि प्रतिबिम्बितोतोङ्गुष्ठमा...न प्रतीतो वस्तुतः पुरुषः पूर्णो यः सर्वान्त...र आत्मा तं धैर्येण विचारयुक्तयाशनैः

शनैः स्वशरीरोपाधेः पृथक् कुर्यात्परिपूर्णं भावयेदुपाध्यसङ्गिनिश्चयेन यथा मुञ्जमध्यस्थवर्तुलशलाकां पृथक्कृत्याऽसंसक्तैवेयमासीदिति निश्चीयते इत्यंशद्वये दृष्टान्तः अथ तमात्मानं शुक्रामृतस्वरूपं जानीयात् प्रकाशाऽविनाशिब्रह्मनात्मातिरिक्तामिति निश्चेयमिति भावः वस्तुस्थितिरियं न प्रौढिवाद इत्यर्थिकाऽऽवृत्तिरितिश्च समाप्त्यर्थः ॥

आख्यायिकामुपसंहरति मृत्युप्रोक्तामिति—

मृत्युप्रोक्तां नाचिकेतोऽथलब्ध्वा विद्य मेतां योगविधिं च कृत्स्नम् । ब्रह्मप्राप्तोविरजोऽभूद्विमृत्युरन्योऽप्येवं यो विदध्यात्ममेव ॥ १८ ॥

यमोक्ताऽध्यात्मज्ञानं तत्प्रकारं च सर्वं ज्ञात्वा ब्रह्मस्वरूपो निर्मलो मृत्युरहितो भून्नाचिकेताः योन्योप्येवं वित् वेत्त्यध्यात्मस्वरूपं सोप्यऽध्यात्मरूपमेव भवति ॥ १८ ॥

अथ शिष्याचार्ययोर्विधिवदध्ययनाऽध्यापनफलाप्तये प्रार्थनारूपशान्तिमाह सहेति—

**सह नाववतु सह नौ भुनक्तु सह वीर्यं करवावहै तेजस्विनावऽधीतमस्तु मा विद्विषावहै ॥ १९ ॥ ॐशान्तिः ३**

परमात्मा तथा नाऽऽवावां पालयतु द्विरुक्तिरादरप्रार्थनादार्ढ्यसूचिका सह मिलित्वाऽऽवामध्यात्मज्ञानरूपं वीर्यं बलं यथा करवावहै परस्परविद्वेषं च न करवावहै

किंचाऽऽवयोरधीतं तेजस्वि भवतु परमात्मन् ॥ १९ ॥

इत्युपनिषत्प्रसादे काठकोपनिषद्द्वितीयाऽध्यायः षष्ठवल्ली च ॥

दययाऽनन्तरामस्य मृदुर्ग्रन्थोऽयमुम्भितः ।
श्रीस्वामीभास्करानन्दैः काश्यां काठकवेदके ॥
क्व शामद्धीः क्व भाष्येण क्व वेदान्ताऽब्धिमन्थनम् ।
तथाऽप्यघाटितं किं वा गुरुदेवदयालवे ॥ २ ॥

# श्रीगणेशाय नमः ।

ओम् भद्रं कर्णेभिरिति शान्तिः३ क्वचित्पुस्तके स्वस्ति न इन्द्र इति च शान्तिः३ एवमन्तेऽपि ॥

अथ वृजिनार्णवनिमग्नमुमुक्षूनुद्दिधीर्षुः परमात्माऽऽथर्वणब्राह्मणे ज्ञानोपासने विवरिष्यन्विद्यास्तुतिशिष्यावधानाय शिष्याचार्ययोग्यताभिव्यञ्जनाय चाऽऽख्यायिकारूपेण प्रश्नोपनिषदमारभते सुकेशा चेति—

सुकेशा च भारद्वाजः शैब्यश्च सत्यकामः सौर्यायणी च गार्ग्यः कौसल्यश्चाश्वलायनो भार्गवो वैदर्भिः कबन्धि कात्यायनः तेहैते ब्रह्मपरा ब्र-

ह्मनिष्ठाः परं ब्रह्माऽन्वेषमाणा एष ह वै तत्सर्वं वक्ष्यतीति तेह समित्पाणयो भगवन्तं पिप्पलादमुपसन्नाः ॥ १ ॥

भरद्वाजसुतस्सुकेशा १ शिविपुत्रस्सत्यकामः २ गर्गगोत्रः सूर्यसुतसौर्यस्य पुत्रस्सौर्यायणिश्च ३ अश्वलसुतः कौसल्यः ४ विदर्भदेशोद्भवो भृगुसुतः ५ कत्यस्य युवापत्यं कबन्धी ६ ते कुलादिप्रसिद्धा एते षट् ह किल वेदनिष्ठाः सगुणब्रह्मतत्पराः परब्रह्मजिज्ञासायां प्रवृत्ताः ह स्फुटमेष आचार्यः सर्वं साङ्गमेतदस्माज्जिज्ञासितं वै निश्चयेन वक्ष्यतीत्याशया गुरूपयोगिकाष्ठादि गृहीत्वा पिप्पलादसकाशं गताः ॥ १ ॥

तान्ह स ऋषिरुवाच भूय

एव तपसा ब्रह्मचर्येण श्रद्धया संवत्सरं संवत्स्यथ । यथाकामं प्रश्नान्पृच्छत यदि विज्ञास्यामः सर्वं ह वो वक्ष्याम इति ॥ २ ॥

तप आदियुक्ता अपि यूयमत्र गुरुसेवा-ब्रह्मचर्य्यदृढविश्वासैरेकवर्षवासानन्तरं य-थेष्टं पृच्छत ततो योग्यतां ज्ञात्वा सर्वं वः पृष्टं वक्ष्यामीत्युवाच पिप्पलादस्तान् षट् नाऽपरीक्ष्य गुरुः शिष्यो वा कार्य इति भावः ॥ २ ॥

अथ कबन्धी कात्यायन उ-पेत्य पप्रच्छ । भगवन्कुतो ह वा इमाः प्रजाः प्रजायन्त इति ॥ ३ ॥

परं जिज्ञासोरप्यऽध्यारोपापवादन्याये-नायं जगत्कारणप्रश्न इति भावः ॥ ३ ॥

**तस्मै सहोवाच प्रजाकामो वै प्रजापतिः स तपोऽतप्यत स तपस्तप्त्वा स मिथुनमुत्पादयते। रयिं च प्राणं चेत्येतौ मे बहुधा प्रजाः करिष्यत इति ॥ ४ ॥**

वाव एवार्थे किल स्फुटयोर्हः वा वै तु प्रसिद्धिस्मारणयोरिति सर्वत्र यथासम्भवं ज्ञेयम्प्राप्यः स पिप्पलादः कल्पादौ प्रजोत्पत्ति कामनावान्हिरण्यगर्भः पूर्वकल्पीयाखिलस्रष्टव्यविषयज्ञानरूपं तपः कृत्वाऽनुसन्धाय चेमौ मम विविधप्रजाः करिष्यत इति रयिप्राणयुगलमुत्पादितवान् ॥ ४ ॥

**आदित्यो ह वै प्राणो रयिरेव**

चन्द्रमाः । रयिर्वा एतत्सर्वं यन्मूर्तंचामूर्तं च तस्मात् मूर्तिरेवरयिः ॥ ५ ॥

ह स्फुटे वै निश्चये स्मरणे वा सूक्ष्मप्राणार्थकप्राणस्य सूर्यः स्थूलधनार्थरयिशब्दस्य च चन्द्रो लक्ष्यार्थः रविचन्द्राऽभेद दृष्ट्याह यत्स्थूलं सूक्ष्मं चैतत्सर्वं रयिरेवेति भेददृष्ट्या तु चन्द्रगताः स्थूलदेहं लभन्ते इति स्थूलश्चन्द्रस्तस्मान्मूर्तमेव रयिः ॥

सर्वात्मत्वं रवेराहाथेति—

अथादित्य उदयन्यत्प्राचीं दिशं प्रविशति तेन प्राच्यान्प्राणान् रश्मिषु संनिधत्ते । यद्दक्षिणां यत्प्रतीचीं यदुदीचीं यदधो यदूर्ध्वं यदन्तरा दिशो-

यत्सर्वं प्रकाशयति तेन सर्वा-
न्प्राणान् रश्मिषु संनिधत्ते ॥६॥

उदयं प्राप्नुवन्सूर्यो यद्दिशो विदिशोऽध ऊर्ध्वं च प्रकाशयति तेन प्रकाशनेन तत्रत्य-सर्वान् प्राणान्प्राणिनः प्रकाश्यपदार्थानिति भावः स्वकिरणेषु कवलयत्यन्तर्भावयति स-र्वात्मात इति भावः ॥ ६ ॥

एतदेव स्फोटयति स इति—

स एष वैश्वानरोविश्वरूपः
प्राणोऽग्निरुदयते । तदेतदृचा-
भ्युक्तम् ॥ ७ ॥

स उक्तमाहात्म्य एष आदित्य वैश्वानरः सर्वप्राणिरूपः नैतावत् विश्वरूपोऽखिलप्रा-ण्यऽप्राणिरूपः परम्परया जाठराग्निस्थिति-हेतुप्राणस्थितिहेत्वन्नादिहेतुव्यापारादिहेतु-तयाऽग्निप्राणरूपश्चाहरहरुदयं याति एत-न्माहात्म्यं मंत्रेणोक्तम् ॥ ७ ॥

मन्त्रमाह विश्वेति ।

विश्वरूपं हरिणं जातवेदसं
परायणं ज्योतिरेकं तपन्तम् ।
सहस्ररश्मिः शतधा वर्तमानः
प्राणःप्रजानामुदयत्येषशूर्यः॥

असङ्ख्यकिरणोऽनेकरूपः प्राणिनां प्राणो य एष सूर्य उदयेति तमेकं तपन्तं ज्योतीरूपं सर्वाधारं जातज्ञानं पाण्डुरवर्णं सर्वस्वरूपं वदन्ति ॥ ८ ॥

स्वनिरूपितसर्वजनककालद्वारारयिप्राणमिथुनस्य सर्वप्रजोत्पादकत्वं रयिमूर्त्तत्वं च सूचयति संवत्सर इति—

संवत्सरो वै प्रजापतिस्तस्यायने दक्षिणं चोत्तरं च तद्येह वैतदिष्टापूर्त्ते कृतमित्यु-

पासते ते चान्द्रमसमेव लोक-
मभिजयन्ते । त एव पुनराव-
र्तन्ते तस्मादेत ऋषयः प्रजा-
कामादक्षिणं प्रतिपद्यन्ते एष
ह्वैः रयिर्यः पितृयाणः ॥ ९ ॥

रविचन्द्रात्मकसंवत्सर एव प्रजाध्यक्षः तस्य षण्मासरूपे रव्यादिगत्याश्रये दक्षिणोत्तरसंज्ञे द्वेऽयने मार्गौ तत्तयोर्मध्ये चान्द्रमसमेव लोकं दक्षिणं ते यान्ति ये प्रसिद्धेष्टापूर्तैमयेदं कर्म कृतमिति भावयन्ति त एव पुनर्जायन्ते प्रजारूपेण तस्मात्सर्व ऐते प्रजार्थिनो दक्षिणायनं यान्ति यः पितृयाणो दक्षिणमार्ग एष रयिरेव चन्द्राधिष्ठितत्वाच्चन्द्र एव ॥ ९ ॥

अपुनरावृत्तिहेतुत्वेन प्राणस्यामूर्तत्वं सूचयति अथेति—

अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययात्मानमन्विष्यादित्यमभिजयन्ते । एतद्वै प्राणानामायतनमेतदमृतमभयमेतत्परायणमेतस्मान्न पुनरावर्तन्त इत्येष निरोधः तदेष श्लोकः ॥ १० ॥

तप आदिभिर्विद्ययोपासनेनात्मानमुपास्यमयं भावयित्वाऽऽदित्यं यान्युत्तरमार्गेण एतदादित्यस्वरूपमेव प्राणाश्रयमविनाश्यऽभयं परागतिः तस्मान्नातः पुनर्जायन्ते इत्युक्तः एष निरोधः सेतुर्मर्यादाकेवलकार्मि-

णामुपासकानां च एष प्राण इति वा तत्त्रोक्तार्थे एष मंत्रः ॥ १० ॥

पञ्चपादं पितरं द्वादशाकृतिं दिव आहुः परे अर्द्धे पुरीषिणम्। अथेमे अन्य उपरे विचक्षणं सप्तचक्रेषडरआहुरर्पितमिति ॥ ११ ॥

हेमन्तशिशिराऽभेदेन पञ्चर्तुपादं सर्वजनकं मासावयवं संवत्सरं दिवोन्तरिक्षस्योत्तरार्द्धे स्थितमादित्याद्वृष्टिप्रसिद्धेः पुरीषिणं नीरवन्तमादित्यस्वरूपमाहुः अथ परे श्रेष्ठा इमेन्य उ अन्ये तु षड्ऋतवोरास्तिर्यगवयवा यस्य तत्र सप्ताश्वयुतसंवत्सरचक्रेस्थितं विचक्षणं सूर्यमाहुः सर्वप्रजाहेतुरुभयथेति भावः इति मन्त्रसमाप्तौ ॥ ११ ॥

मासात्मनापि संवत्सरस्य जगद्धेतुकर्महे-
तुतेत्याह मास इति—

मासो वै प्रजापतिस्तस्य कृष्णपक्ष एव रयिः । शुक्लः प्राणस्तस्मादेत ऋषयः शुक्ल इष्टं कुर्वन्तीतर इतरस्मिन् ॥१२॥

ऋषयः क्रान्तदर्शिनः शुक्लोपलक्षिताचिरादिमार्गनिमित्तकमेवेष्टं यागादिकुर्वन्तीतरे साधारणजनास्त्वितरस्मिन्पितृयाणनिमित्तकम् ॥ १२ ॥

पूर्ववदाहाहोरात्र इति—

अहोरात्रो वै प्रजापतिस्तस्याहरेव प्राणो रात्रिरेव रयिः प्राणं वा एते प्रस्कन्दन्ति । ये दिवा रत्या सयुज्यन्ते ब्र-

ह्मचर्यमेव तद्यद्रात्रौ रत्या सं-
युज्यन्ते ॥ १३ ॥

पूर्वार्द्धार्थः पूर्ववत् स्वस्योत्पत्स्यमानस्य च प्राणमायुः शोषयन्ति ते ये रत्यर्थं दिवा स्त्रिया संयुज्यन्ते दिवामैथुनमायुर्हरतीति भावः रात्रौ तु तद्ब्रह्मचर्यमेवेति प्रशंसा प्रजोत्पादकमपि मैथुनं कर्म्म न दिवाकार्यमिति प्रासङ्गिकोक्तिः ॥ १३ ॥

कुतः प्रजाः प्रजायन्त इति प्रश्नस्योत्तरं पर्यवस्यन्प्रजापतेर्हिरण्यगर्भात्क्रमेणोत्पन्नानामपि प्रजापतित्वेन कालनिर्वर्त्यान्नमेवप्रजापतिरन्नाच्च पुंस्त्रीरेतो रेतसा च प्रजा इत्याहान्नमिति ।

अन्नं वै प्रजापतिस्ततो ह वै तद्रेतस्तस्मादिमाः प्रजाः प्रजायन्त इति ॥ १४ ॥

इति समाप्तौ प्रथमो हिरण्यगर्भो यदा भासस्तत्परं ब्रह्मेति परमाशयः ॥ १४ ॥

फलमाह तदिति—

तद्येह वै तत्प्रजापतिव्रतं चरन्ति ते मिथुनमुत्पादयन्ते । तेषामेवैष ब्रह्मलोको येषां तपो ब्रह्मचर्यं येषु सत्यं प्रतिष्ठितम्॥

यस्मात्प्रजापतिसम्पादितं मैथुनव्रतं तत्तस्माद्येतद्व्रतं कुर्वन्ति ते गृहस्था मिथुनं पुत्रीं पुत्रं च लभन्ते किञ्च यदि तपः स्वधर्माचरणं स्वधर्मपत्न्यामृतौ मैथुनात्मकब्रह्मचर्यं सत्यं च तर्हि तेषां ब्रह्म समीपवर्ति स्वर्गलोकोपि भवति ॥ १४ ॥

तेषामसौ विरजो ब्रह्मलोको न येषु जिह्ममनृतं न माया चेति॥

येषां पुनर्लेशतोऽपि कौटिल्यमनृतता कपटं च नास्ति तेषां प्रजापतिलोको गृहिणां तदन्याश्रमिणां वा प्रासङ्गिकी च फलोक्तिः ॥ १६ ॥

इति प्रश्नोपनिषत्प्रसादे प्रथमः प्रश्नः ।

---

प्रजानां कारणं श्रुत्वा क एषां मुख्यो धर्तेति
पृच्छत्यथेति—

अथ हैनं भार्गवो वैदर्भिः पप्रच्छ । भगवन्कत्येव देवाः प्रजां विधारयन्ते कतर एतत्प्रकाशयन्ते कः पुनरेषां वरिष्ठ इति ॥ १ ॥

एनं पिप्पलादम् प्रजाम् एतत् शरीरमित्यर्थः वरिष्ठः श्रेष्ठः ॥ १ ॥

तस्मै सहोवाचाकाशो ह

वा एष देवो वायुरग्निरापः पृथिवी वाङ्मनश्चक्षुः श्रोत्रं च। ते प्रकाश्याभिवदन्ति वयमेतद्बाणमवष्टभ्य विधारयामः॥

स पिप्पलादः पञ्चभूतदशेन्द्रियधर्मिनश्चित्ताहङ्काराः देवास्तेपृथक् पृथगऽवकाशदानेनेत्येवं स्वस्वसामर्थ्यं प्रकाश्य शिथिलं यथा न स्याद्विनाशाय तथाऽवष्टभ्य निरुध्यतच्छरीरं वयं धारयाम इत्युक्तवन्तः ॥२॥

तान्वरिष्ठः प्राण उवाच मा माहमापद्यथाऽहमेवैतत्पञ्चधात्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारयामीति तेऽश्रद्दधाना बभूवुः ॥ ३ ॥

मोहोऽविवेकः अश्रद्दधानाः अस्माभिः कृतमप्येनेनैव कृतमित्यत्र विश्वासहीनाः ॥

सोऽभिमानादूर्ध्वमुत्क्रमत इव तस्मिन्नुत्क्रामत्यथेतरे सर्व एवोत्क्रामन्ते तस्मिंश्च प्रतिष्ठमाने सर्व एव प्रातिष्ठन्ते । तद्यथा मक्षिका मधुकरराजानमुत्क्रामन्तं सर्वा एवोत्क्रामन्ते तस्मिंश्च प्रतिष्ठमाने सर्वा एव प्रतिष्ठन्त एवं वाङ्मनश्चक्षुः श्रोत्रं च ते प्रीताः प्राणं स्तुवन्ति ॥ ४ ॥

अथ विश्वासाय प्राण उद्गच्छन्निव देहाद्बभूव तथा सति वागादयोपि तथाबभूवुः

पुनः स्वस्थे प्राणे स्वस्थाः मधुमक्षिका इव अथ प्रीता जातविश्वासास्ते वागादयः ॥४॥

एषोऽग्निस्तपत्येष सूर्य एषपर्जन्यो मघवानेष वायुरेष पृथिवी रयिर्देवः सदसच्चामृतं च यत् ॥ ५ ॥

एष प्राणोऽग्न्यादिकृत्यकर्तेति भावः ॥५॥

अरा इव रथनाभौ प्राणे सर्वं प्रतिष्ठितम् । ऋचो यजूंषि सामानि यज्ञः क्षत्रं ब्रह्म च॥६॥

नाभिश्चक्रमध्यकाष्ठम् धर्मपालनानुष्ठानं क्षत्रियब्राह्मणकर्म च छत्रं ब्रह्म ॥ ६ ॥

प्रजापतिश्चरसि गर्भे त्वमेव प्रतिजायसे। तुभ्यं प्राणप्रजा-

**स्त्वमावलिं हरन्ति यः प्राणैः प्रतितिष्ठसि ॥ ७ ॥**

प्रजापतिः पिता माता त्वमेव रेतोरूपो गर्भगश्चोत्पद्यसे च पुनरपत्यरूपः हे प्राणयस्त्वमिन्द्रियैस्सह देहे तिष्ठस्यतस्तुभ्यमिन्द्रियैर्विषयार्पणं कुर्वन्ति ॥ ७ ॥

**देवानामसि वह्नितमः पितृणां प्रथमास्वधा । ऋषीणां चरितं सत्यमथर्वाङ्गिरसामसि ॥ ८ ॥**

देवानां मुख्योऽग्निः पितृणां मुख्या स्वधा त्वमसि प्राणतृप्त्यैव तेषां च तृप्तिरिति भावः अथर्वाङ्गिरः प्रभृतिऋषीणां सत्याचारश्च त्वमेवासि ॥ ८ ॥

**इन्द्रस्त्वं प्राणतेजसा रुद्रोऽसि परिरक्षिता । त्वमन्तरि-**

क्षे चरसि सूर्यस्त्वं ज्योतिषां-
पतिः ॥ ९ ॥

हे प्राण त्वं तेजसा रुद्रः संहर्त्ता अन्तरिक्षगो वायुः ॥ ९ ॥

यदा त्वमभिवर्षस्यथेमाः प्राणते प्रजाः । आनन्दरूपास्तिष्ठन्तिकामायान्नं भविष्यतीति ॥ १० ॥

हे प्राण त्वमिन्द्रस्सूर्यो वा सन् यदा कामायाभिलाषाय यथेष्टमन्नं भविष्यतीत्याशयेन ॥ १० ॥

व्रात्यस्त्वं प्राणैक ऋषिरत्ता विश्वस्य सत्पतिः। वयमाद्यस्य दातारः पिता त्वं मातरिश्वनः॥

हे प्राण व्रात्योऽसंस्कृतोऽनघत्वात् आथर्वणानामेक ऋषिसंज्ञोऽग्निस्सन्नत्ताहविषः मातरिश्व हे मातरिश्वन् नोऽस्माकम् वयं त्वाद्यस्य वृद्धस्य तवोपनेतारस्त्वत्कृपालब्धान्नस्य ॥ ११ ॥

**या ते तनूर्वाचि प्रतिष्ठिता या श्रोत्रे या च चक्षुषि। या च मनसि सन्तता शिवां तां कुरुमोत्क्रमीः ॥ १२**

तनूरपानादिरूपा शिवां मङ्गलरूपां स्थिरामिति यावत् उत्क्रमणं मा कार्षीः अन्यथा वागादेरप्युत्क्रमणेनाऽमङ्गलं स्यादिति भावः ॥ १२ ॥

**प्राणस्येदं वशे सर्वं त्रिदिवे यत्प्रतिष्ठितम् । मातेव पुत्रान्-**

रक्षस्व श्रीश्च प्रज्ञां च विधेहि न इति ॥ १२ ॥

त्रिदिवे त्रिलोक्यां यत्तदिदं सर्वं त्वदऽधीनं ततोऽस्मान्वागादींत्रक्ष श्रियः शरीरकान्त्यादि शोभाः प्रज्ञां चेष्टां चास्माकं कुरु स्वस्थित्येति भावः इतिरुत्तरावसाने एतावता प्रपञ्चेन प्राण एव प्रजानां मुख्यो धारयितेति निर्गलितमुत्तरम् ॥ १२ ॥

इति प्रश्नोपनिषत्प्रसादे द्वितीयः प्रश्नः ।

प्राणाधीनस्थितिको हि हिरण्यगर्भोऽपि प्रजा नतत्प्रजा च प्राण इति जातसंशयस्य प्राणकारणप्रश्नमवतारयत्यथेति—

अथ हैनं कौसल्यश्चाश्वलायनः पप्रच्छ भगवन्कुत एष प्राणो जायते कथमायात्य-

स्मिञ्छरीरे आत्मानं वा प्रविभज्य कथं प्रातिष्ठते केनोत्क्रमते कथं वाह्यमभिधत्ते कथमध्यात्ममिति ॥ १ ॥

कुतः कारणात् कथं केन प्रकारेणायाति विशति तिष्ठति उत्क्रमते निर्गच्छति वाह्यमधिभूतमध्यात्ममिन्द्रियादि धत्ते धारयतीति पप्रच्छ ॥ २ ॥

तस्मै स होवाचातिप्रश्नान्पृच्छसि । ब्रह्मिष्ठोसीति तस्मात्तेऽहं ब्रवीमि ॥ २ ॥

अतिप्रश्नानऽतिदुर्विज्ञेयान् अतिशयेन वेदविदसीतियतस्तस्मात् ॥ २ ॥

आत्मन एष प्राणो जायते

**यथैषा पुरुषेच्छायैतस्मिन्नेत-दाततं मनोकृतेनायात्यस्मि-ञ्छरीरे ॥ ३ ॥**

आत्मनश्चिदात्मनः पुरुषे देहे सति छाया यथा न किञ्चिदपि किञ्चिदिव तथा मिथ्यैवैतस्मिंश्चिदात्मन्येतत्प्राणनामप्राप्तम् मनः कृतशुभाशुभकर्माधीनः स्थूलदेहे प्रवेशः पूर्वपूर्वशरीरोत्पन्नकर्महेतुकोत्तरोत्तरशरीरसम्बन्धइत्ययं प्राकारःप्रवेशोइति भावः ॥ ३ ॥

आत्मानं विभज्य कथं तिष्ठतीत्यस्योत्तरायाह यथेति—

**यथा सम्राडेवाधिकृतान्विनियुङ्क्तेविनेताग्रामानाधितिष्ठस्वेत्यवमेवैष प्राण इतरान्प्राणान् पृथक् पृथगेव सन्निधत्ते ॥४॥**

यथा राजा तेषु तेषु ग्रामेषु ग्रामकृत्याय-पुरुषं स्थापयति तथा प्राणः प्राणानिन्द्रियाणि तत्तद्गोलके ॥ ४ ॥

विभागं प्रेरकत्वं चाह प्राणस्य पाय्विति ।

**पायूपस्थेऽपानं चक्षुःश्रोत्रे मुखनासिकाभ्यां प्राणः स्वयं प्रातिष्ठते मध्ये तु समानः । एष ह्येतद्धुतमन्नं समं नयति तस्मादेताः सप्तार्चिषो भवन्ति॥**

पायूपस्थस्थाने तदिन्द्रियाभ्यां मलमूत्रमपनयन्नपानमपानास्तिष्ठति मुखनासिकाभ्यां सह चक्षुःश्रोत्रे सप्तच्छिद्रेष्विति यावत् मध्ये नाभौ हुतं जाठराग्नौ प्रक्षिप्तं भुक्तमिति यावत् तस्मात्समीकृतान्नरसबलादुक्तच्छिद्रेष्वऽर्चिषो रूपादेरभिव्यक्तयः प्रकाशाभवन्ति ॥ ५ ॥

हृदि ह्येष आत्मा अत्रैतदेक-
शतं नाडीनां तासा शतं शत-
मेकैकस्यां द्वासप्ततिर्द्वासप्ततिः
प्रतिशाखानाड़ीसहस्राणि भ-
वन्त्यासुव्यानश्चरति ॥ ६ ॥

आत्मा चिदाभासो जीवः अत्र हृदि प्रधाननाड़ीनामेकोत्तरशतम् तासां मध्ये पुनरेकैकनाड्यां शतं शतं शाखारूपानाड्यः प्रतिशाखाः एकैकशाखा रूपनाड़ी प्रति पुनर्द्वासप्ततिर्द्वासप्ततिः सहस्राणि नाड्यः आसूक्तसर्वनाड़ीषु ॥ ६ ॥

अथैकयोर्ध्व उदानः पुण्येन
पुण्यं लोकं नयति पापेन पाप-
मुभाभ्यामेव मनुष्यलोकम् ॥

एकया सुषुम्नाख्यप्रधाननाड्योर्ध्वऊर्ध्वं गच्छन् केनोत्क्रमते इत्यस्योत्तरमिदम् पापं नरकम् देवतिर्यग्मनुष्ययोनिमिति यावत् ॥

कथं वाह्यं धत्ते इत्यस्योत्तरमाहादित्य इति—

आदित्यो ह वै वाह्यः प्राण उदयत्येष ह्येनं चाक्षुषं प्राणमनुगृह्णानः । पृथिव्यां या देवता सैषा पुरुषस्यापानमवष्टभ्यान्तरा यदाकाशः स समानो वायुर्व्यानः ॥ ८ ॥

रविः भुवो देवता अनयोर्मध्ये य आकाशोन्तरिक्षम् वायुः एते वाह्यप्राणादयश्चक्षुरादिस्थानध्यात्मप्राणादीन्क्रमेणप्रकाशं दत्वा आकर्षणेनावष्टभ्य अवकाशं दत्वा

वलं दत्वाऽनुगृह्णन्ति साहाय्यं कुर्वन्ति एवं स सहायः सर्वं धारयतीति भावः ॥ ८ ॥

**तेजो ह वा उदानस्तस्मादुपशान्ततेजाः । पुनर्भवमिन्द्रियैर्मनसि संपद्यमानैः ॥९॥**

तेजो वाह्याग्निरुत्क्रमितारं उदानमनुगृह्णान उदान उच्यते यतस्तस्मान्मरणसमये शान्तोष्णिमाऽत्रदेहे मनसि लीनैरिन्द्रियैस्सह पुनर्भवं देहान्तरं याति जीव इत्येष उत्क्रान्तिप्रकारः ॥ ९ ॥

पुनः प्रकारं लोकं चाह यच्चित्त इति—

**यच्चित्तस्तेनैष प्राणमायाति प्राणस्तेजसा युक्तः । सहात्मना यथा संकल्पितं लोकं नयति ॥**

मरणकाले यच्चित्तो यत्स्मरन्भवति तेन

स्मरणेन सहैष जीवः प्राणमात्रवृत्तिकः प्राणमयो भवति प्राणश्चोदानवृत्तियुक्तः स्वेन सहैनं जीवमस्य वाञ्छितं लोकं नयति॥१०॥

प्राणकारणतया चिदात्मानं जगत्कारणमभिधाय प्रासङ्गिकोक्तप्राणमहिम्नः फलमुपासनत आह य इति—

य एवं विद्वान्प्राण वेद न हास्य प्रजा हीयतेऽमृतो भवति तदेषश्लोकः ॥ ११ ॥

यः एवमुक्तं प्राणोत्पत्त्यादिप्रकारं विद्वान्प्राणमुपास्तेनास्य पुत्रादिर्नश्यतिदीर्घायुश्चभवतिसः तदुक्तमेष मंत्रो वदति ॥ ११ ॥

उत्पत्तिमायतिंस्थानं विभुत्वंचैवपञ्चधा। अध्यात्मं चैवप्राणस्य विज्ञायामृतमश्नुते विज्ञायामृतमश्नुत इति॥१२॥

आयतिमागमनं देहे स्थानं पाय्वादिषु स्थितिम् विभुत्वमपानादिभेदम् च पञ्चधा पदाभ्यामादित्यादिप्राणभेदा गृह्यन्ते अध्यात्मं चक्षुरादिभेदम् विज्ञाय भावयित्वा आवृत्तिःप्रश्नपर्यवसाने ॥ १२ ॥

इति प्रश्नोपनिषत्प्रसादे तृतीयः प्रश्नः ॥

---

प्रश्नोत्तरत्रयेणप्राणान्तमनात्मेत्याज्ञायात्मानि-
र्दिधारयिषया पृच्छत्यथेति—

**अथ हैनं सौर्यायणी गार्ग्यः पप्रच्छ भगवन्नेतस्मिन्पुरुषे कानि स्वपन्ति कान्यस्मिञ्जाग्रति कतर एष देवः स्वप्नान्पश्यति कस्यैतत्सुखं भवति कस्मिन्नु सर्वे संप्रतिष्ठिता भवन्तीति ॥ १ ॥**

पुरुषे सुप्ते कानि करणानि निर्व्यापारा-
णि १ कानि च सव्यापाराणि २ स्वप्नद्रष्टा च
कः ३ सुषुप्तिसुखं कस्य ४ कस्मिंश्च तदा
लीयन्ते ५ ॥ १ ॥

तस्मै स होवाच यथा गा-
र्ग्यमरीचयोऽर्कस्यास्तं गच्छ-
तः सर्वा एतस्मिंस्तेजोमण्ड-
ल एकी भवन्ति ताः पुनरुदय-
तः प्रचरन्त्येवं ह वै तत्सर्वं प-
रे देवे मनस्येकीभवति तेन
तर्ह्येष पुरुषो न शृणोति न प-
श्यति न जिघ्रति न रसयते
न स्पृशते नाभिवदते नादत्ते
नानन्दयते न विसृजते नेया-

यते स्वपितीत्याचक्षते ॥ २ ॥

उदयतो मण्डलाद्यथा किरणाःप्रसरन्ति तथा जाग्रतो मनसो विभक्तानीन्द्रियाणि चेष्टन्ते ऽस्ताचलं गच्छत्येकीभवन्ति यथा मण्डले तथा स्वापे मनसीन्द्रियाणि। अतस्तदा न शब्दादीञ्जानाति पञ्च न कर्माणि च करोति। इयायते गच्छति स्वपित्ययमिति जना वदन्ति ॥ २ ॥

जाग्रति जाग्रति सर्वाणि सुप्तौ च
दशेन्द्रियान्यानि प्राणास्सदा त
आह प्राणाग्नय एवेति—

प्राणाग्नय एवैतस्मिन्पुरे जाग्रति गार्हपत्यो ह वा एषोऽपानो व्यानोऽन्वाहार्यपचनो यद्गार्हपत्यात्प्रणीयते प्रणयनादाहवनीयः प्राणः ॥ ३ ॥

होमार्थं यतोग्नेः कुण्डान्तरे नीयते ऽग्निस्तौ क्रमेण गार्हपत्याऽऽहवनीयौ । आद्यस्तु सदाग्निहोत्रिभी रक्ष्यते । भक्ष्या हुत्यर्थं चाऽपानात्प्रणः प्रणीयते इव सदोर्ध्वगः । व्यानस्तु दक्षिणसुषिरान्निर्गच्छति हृदयादतोन्वाहार्य पचनो दक्षिणाग्निः । कल्पनेयमुपासनार्था ॥ ३ ॥

यदुच्छ्वासनिश्वासावेतावाहुतीसमं नयतीति स समानः । मनोहवाव यजमान इष्टफलमेवोदानः स एनं यजमानमहरहर्ब्रह्म गमयति ॥ ४ ॥

धातूनामन्नादेश्च साम्यायप्राणोद्गतिप्रवेशाख्योच्छ्वासनिश्वासाहुत्योस्समनंनयनात्समानो होता । देहादुत्क्रमणेन स्वर्गादीष्ट-

फलाप्तिरित्युदान इष्टफलम् । स उदानोऽहरहस्सुषुप्तौ मनो ब्रह्मणि प्रापयति । प्रतिदिनमेवमग्निहोत्रं तत्फलं च भवतीति भावयेदिति भावः ॥ ४ ॥

तृतीयोत्तरमाहात्रेति—

अत्रैष देवः स्वप्ने महिमानमनुभवति । यद्दृष्टं दृष्टमनुपश्यति श्रुतं श्रुतमेवार्थमनुशृणोति देशदिगन्तरैश्च प्रत्यनुभूतं पुनः पुनः प्रत्यनुभवति दृष्टं चादृष्टं च श्रुतं चाश्रुतं चानुभूतं चाननुभूतं च सच्चासच्च सर्वं पश्यति सर्वः पश्यति ॥

देवो मनः । स्वप्ने प्रतीताखिलपदार्थाकारभवनं स्वस्य महिमानमनुभवति यतः स-

कृदसकृद्वासामीप्येन देशान्तरैर्दिगन्तरैर्वाद-र्शनश्रवणादिना स्वास्मिन्यद्वासितं तमेव पदार्थमनुभवति। यत्राधिकवासना तच्च पुनः पुनः। अत्र जन्मन्यदृष्टश्रुतमपि जन्मान्तर-दृष्टश्रुतं चेत्तदपि। अलं बहूक्त्या सर्वः स-र्वपदार्थाकारो भूत्वा सत्पटाद्यसन्मरीचि-कादि सर्वमनुभवति ॥ ५ ॥

चतुर्थोत्तरमाह स इति—

**स यदा तेजसाभिभूतो भ-वति अत्रैष देवः स्वप्नान्न पश्य-त्यथ तदैतस्मिञ्छरीरे एतत् सुखं भवति ॥ ६ ॥**

स मनोदेवस्तेजसापित्तेनाभिभूत आ-क्रान्तो रुद्धनाडीद्वारो यदा यदात्र सुषुप्तौ न पश्यति स्वप्नान्। तत एतद्ब्रह्माख्यं सुखं सुखरूपमात्मनो भवतीति भावः ॥ ६ ॥

पञ्चमोत्तरमाह स यथेति—

**स यथा सोम्यवयांसि वासो वृक्षं सम्प्रतिष्ठन्ते । एवं ह वै तत्सर्वं पर आत्मनि संप्रतिष्ठते ॥**

निशि निजवासवृक्षं पक्षिण इव सर्वं परमानन्दात्मनि प्रयाति सुषुप्तौ ॥ ७ ॥

सर्वमेवाह पृथिवीति—

**पृथिवी च पृथिवीमात्रा चापश्चापो मात्रा च तेजश्च तेजो मात्रा च वायुश्च वायुमात्रा चाकाशश्चाकाशमात्रा च चक्षुश्च द्रष्टव्यं च श्रोत्रं च श्रोतव्यं च घ्राणं च घ्रातव्यं च रसश्च रसयितव्यं च त्वक्च स्पर्श-**

यितव्यं च वाक्चवक्तव्यं च-
हस्तौ चादातव्यं चोपस्थश्चा-
न्दयितव्यं च पायुश्च विस-
र्जयितव्यं च पादौ च गन्तव्यं
च मनश्चमन्तव्यं च बुद्धिश्च
बोद्धव्यं चाहङ्कारश्चाहर्तव्यं
च चित्तंच चेतयितव्यं च ते-
जश्च विद्योतयितव्यं च प्रा-
णश्चविधारयितव्यं च ॥८॥

भ्वादीनि पञ्च तथा तन्मात्राख्यगन्धा-
दीनि च पञ्चभूतानि धीन्द्रियाणि तद्विष-
याश्च कर्मेन्द्रियाणि तत्कर्माणि च सविष-
यंचान्तःकरणचतुष्टयम् तेजस्तेजोमयी का-
श्चित्त्वक् तद्ग्राह्यो विषयश्च प्राणेन विधार-
यितव्यं चाखिलसङ्घातस्वरूपम् ॥ ८ ॥

पृथिवी चेत्यादावनुक्तं शिष्टंचेंदाभा-
समाहैषहीति—

एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता बिज्ञानात्मा पुरुषः सपरे ऽक्षरे आत्मनि सम्प्रतिष्ठते ॥

विज्ञानात्मान्तःकरणोपाधिको यः पुरुषः पुरि देहे देहेऽस्ति एष ह्येष एव द्रष्ट्रादिः सोपिसुप्तौपरेविम्वात्मनियातीवोपाध्यनभि-व्यक्ततयेति भावः ॥ ९ ॥

मुक्तिस्तुपरैकत्वज्ञानेनाज्ञाननिवृत्यै-
वेत्याह परमिति—

परमेवाक्षरंप्रातिपद्यतेसयो ह वै तदच्छायमशरीरमलोहितं शुभ्रमक्षरं वेदयते यस्तुसोम्य

स सर्वज्ञः सर्वो भवति तदेष श्लोकः ॥ १० ॥

यः सुषुप्तः स परं प्राप्नोतीवैवनतु मुच्य इति ह स्फुटैर्वैस्मर्यते च यस्तु हे सोम्य-शान्तमूर्ते ऽनविद्यमदेहमन्तः करणोपाधिकृतरागलौहित्यहीनं शुद्धमविनाशितत्परं जानातिस्वात्मतया केवलं ससर्वज्ञः सर्वरूपो भवति तदुक्तमेष मन्त्रो वदति ॥ १० ॥

विज्ञानात्मा सह देवैश्च सर्वैः प्राणाभूतानिसंप्रतिष्ठन्ति यत्र तदक्षरं वेदयते यस्तु सोम्य स सर्वज्ञः सर्वमेवाविवेशेति ॥

विज्ञानात्मान्तः करणोपाधिक आत्मा प्राणाः पञ्चभूतानि च देवैरिन्द्रियैस्सह यत्र

लीयन्ते तत्परं ब्रह्म यो वेद स सर्वमाविवेश भवति इति पूर्त्तौ ॥ ११ ॥

इति प्रश्नोपनिषत्प्रसादे चतुर्थः प्रश्नः—

---

अथ गार्ग्यप्रश्नोत्तरेण परमक्षरं विम्बचैतन्यमात्मा तदेकत्वविज्ञानाच्च केवली भाव इति निश्चित्य प्रणवतदुपास्त्योर्माहात्म्यश्रुतेः प्रणवोपास्त्याभिव्यज्यते केवलीभावो नवेति संशये शैव्यप्रश्नमवतारयत्यथेति ॥

**अथ हैनंशव्यःसत्यकामः पप्रच्छ स यो हवै तद्भगवन्मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत कतमम्वावसतेन लोकंजयतीति तस्मै सहोवाच ॥**

हेतद्भगवन् प्रसिद्धे ब्रह्माणि बातच्छब्दः मनुष्येषु स यः कश्चित् प्रायणं मृतिः तेन ध्यानेन जयति प्राप्नोति सपिप्पलादः ॥१॥

यदुवाच तदा हैतदिति—

एतद्वै सत्यकामपरं चापरं च ब्रह्मयदोङ्कारः तस्माद्विद्वानेते नैवायतनेनैकतरमन्वेति ॥ २॥

अवधारणे वै हे सत्यकाम परं निर्विशेषमपरं हिरण्यगर्भादि यदेतद्ब्रह्म तद्द्वयमोङ्कार एव तस्मादेनं ध्यायन्नेतद्ध्यानाश्रयेण यथेष्टं परमपरं वा ब्रह्म याति ॥ २ ॥

तत्र तावदपरविषयं प्रणवाऽवयवभेदादुपास्तिद्वयं सफलमाह स यदीत्यादिना—

स यद्येकमात्रमभिध्यायीत सतेनैव संवेदितस्तूर्णमेव जगत्यामभिसम्पद्यते तमृचोमनुष्यलोकमुपनयन्तेस तत्र तपसा ब्रह्मचर्येण श्रद्धया सम्पन्नो महिमानमनूभवति ॥ ३ ॥

स उपासकः प्रथममात्राऽकाररूपमेव प्रणवमकारमेव वोपासीत तर्हि तेन ध्यानेन युतः शीघ्रं भुवियाति ऋचः ऋग्वेदमन्त्राश्च तं मनुष्यदेहं ग्राहयन्ति पृथिव्यृग्वेदश्चाऽकार इत्यादि श्रवणात् मनुष्यत्वेपि यदि तप आदिमाँस्तर्हि सार्वभौमादिसुखमनुभवति नान्यथेतिभावः ॥ ३ ॥

**अथ यदि द्विमात्रेण मनसि सम्पद्यते सोऽन्तरिक्षं यजुर्भिरुन्नीयते सोमलोकम् स सोमलोके विभूतिमनुभूय पुनरावर्तते ॥ ४ ॥**

द्वितीयमात्रोकाररूपमेव प्रणवमुकारमेव वा सम्पद्यते उपासीत यस्तं यजुर्वेदमन्त्रा अन्तरिक्षस्थचन्द्रलोके जन्म प्रापयन्ति

आवर्तते यथा कर्म कांचिज्जनिं लभते भुवि पुनः ॥ ४ ॥

अथ परविषयकं सफलध्यानमाह य इति—

यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये सम्पन्नः यथा पादोदरस्त्वचा विनिर्मुच्यत एवं ह वै सपाप्मनाविनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते तदेतौ श्लोकौ भवतः ॥५॥

त्रिमात्रमोमित्यक्षरमितिज्ञानपूर्वकमेतं प्रणवं परं ब्रह्मध्यायीत यस्सतेजोमयसूर्य-

मण्डलं गतस्त्वचा सर्प इवाखिलपापरहितो भूत्वा सामवेदमन्त्रैस्सत्यलोकं नीयतेऽथ तत्र सर्वप्राणिलिङ्गशरीराभिमानितयाजीव संघातरूपपराद्धिरण्यगर्भात्परं सर्वं चराचर-पुरिशयनात्पुरुषं पूर्णं ब्रह्म जानाति व्यज्यत एवैवं ततः केवलीभाव इति भावः तदुक्तार्थे-मन्त्रौ स्तः ॥ ५ ॥

तिस्रो मात्रा मृत्युमत्यः प्र-युक्ता अन्योन्यसक्ता अनवि-प्रयुक्ताः क्रियासु वाह्याभ्यन्त-रमध्यमासु सम्यक् प्रयुक्ता-सु न कम्पते ज्ञः ॥ ६ ॥

जाग्रत्स्वप्नसुषुप्तिषु वाह्यादि क्रियासु वि-श्वतैजसप्राज्ञतया ध्याने प्रयुक्तासु सक्ता मिलिताः प्रणवमात्रा नाऽविप्रयुक्ता विश्वा-

द्यभेदेन विशेषेण प्रयुक्ताश्चेत्स ज्ञो जाग्रद्वि-
श्वाद्यभिन्नप्रणवोपासको न कम्पते न पुन-
रावर्तते केवलवर्णध्याने प्रयुक्ताश्चेदकारो-
कारमकारा मृत्युमत्योमृत्युदा एवेत्यर्थः ॥६॥

ऋग्भिरेतं यजुर्भिरन्तरिक्षं सामभिर्यत्तत्कवयो वेदयन्ते तमोङ्कारेणैवायतनेनान्वेतिविद्वान्यत्तच्छान्तमजरममृतमभयं परं चेति ॥ ७ ॥

एतं मनुष्यलोकम् कवयः क्रान्तदर्शिनो यद्वदन्ति तत्सत्यलोकमिति यावत् तं लोकं चोङ्कारेणैवाप्नोति विद्वानुपासकः प्रणवस्य ब्रह्मतया तं कम् शान्त्याद्युपलक्षितं यत्तत्परं ब्रह्म तदाख्यमित्यर्थः ॥ ७ ॥

इति प्रश्नोपनिषत्प्रसादे पञ्चमः प्रश्न—

एवं परब्रह्म जिज्ञासानिवृत्तावपि षोड़शकलः कश्चन पुरुषोऽन्योऽनन्यो वा ब्रह्मचित्त इति स्थूणानिखननन्यायेन षष्ठप्रश्नमवतारयत्यथेति ॥

अथ हैनं सुकेशा भारद्वाज पप्रच्छ भगवन् हिरण्यनाभः कौसल्यो राजपुत्रो मामुपेत्यैतं प्रश्नमपृच्छत षोडशकलं भारद्वाज पुरुषं वेत्थ तमहं कुमारमब्रुवं नाहमिमंवेद यद्यहमिममवेदिषं कथं तेनावक्ष्यमिति समूलो वा एष परिशुष्यति योऽनृतमभिवदति तस्मान्नार्हाम्यनृतं वक्तुं सतूष्णीं रथमा-

रुह्यप्रवव्राज तं त्वा पृच्छामि क्वासौ पुरुष इति ॥ १ ॥

एनं पिप्पलादम् । षोड़शकला अवयवा यत्र तं पुरुषं जानासीत्येतं प्रश्नं राजकुमारः कश्चन कोसलायां भवो हिरण्यनाभनामामामपृच्छत् न जानामि जानँ श्च कुतो न वक्ष्यामि योग्याय मिथ्यावादी तु ससुकृतादिमूलो विनश्यतीति नाऽनृतं वच्मीत्यवोचमहन्तम् । स ततो जगाम मौनीत्यहं त्वां तं पुरुषं पृच्छामि कुत्रास्ति षोड़शकल इति ॥ १ ॥

तस्मै सहोवाच इहै वान्तः शरीरे सोम्यसपुरुषो यस्मिन्नेताः षोडशकलाः प्रभवन्तीति ॥ २ ॥

हे सोम्यप्रियमूर्ते यस्मिन्नधिष्ठान भूते क-
ला जायन्ते सोन्तर्हृदयाकाशे एवेति पिप्प-
लादो भारद्वाजायोवाच पूर्णोपि चिदात्मा
ह द्येव प्रतीयत इतियमुक्तिरिति भावः ॥२॥

स यथा षोड़शकलस्तदाह स इति—

**स ईक्षां चक्रे कस्मि न्नह मुत्क्रान्त उत्क्रान्तो भविष्या- मि कस्मिन्वा प्रतिष्ठिते प्रति ष्ठास्यामीति ॥ ३ ॥**

कस्मिन्निर्गत देहान्निर्गत इव प्रतिष्ठिते वा देहेऽचलस्थित इव भविष्यामीति स पु- रुषोऽनादि निजाध्यस्तशक्त्याऽऽलोचित- वान् ॥ ३ ॥

ईक्षोत्तर कृत्यमाह स इति—

**स प्राणमसृजतप्राणाच्छ्रद्धां खं वायुर्ज्योतिराप पृथिवी-**

न्द्रियं मनः अन्नमन्नाद्वीर्यं तपोमन्त्राः कर्म लोका लोकेषु च नाम च ॥ ४ ॥

स चिदात्मेश्वरात्मा पुरुषः प्राणं सूक्ष्म प्राणिजातन्तदनन्तरं प्राणिश्रद्धामसृजदभावयत् । तदनन्तरं क्रमेण खादिपञ्चभूतेन्द्रियमनोऽन्नबलतपो वेदकर्मलोकनामानीति चतुर्दशासृजदुत्पादितवान् वस्तुतस्त्वभाव यदित्येव से श्वरजगदध्यासेतात्पर्यात्॥

अथोक्तनाम रूपात्मजगत्कलानामाधिष्ठान चिदात्मपुरुषे लयमाह केवलीभावाय स यथेति—

स यथेमानद्यः स्पन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति भिद्येते तासांनाम

रूपे समुद्र इत्येवं प्रोच्यते । एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति भिद्येते तासां नाम रूपे पुरुष इत्येवं प्रोच्यते स एषोऽकलोऽमृतो भवति तदेषश्लोकः ॥ ५ ॥

समुद्रायणास्समुद्रगातिकाः नाम रूपे प्रातिस्विके । पुरुषायणाः पूर्ववत्पुरुषाश्रयाः पुरुषं प्राप्य प्रकृतिप्रलय इति शेषः वस्तुतस्तुचिदात्मपुरुषभावनया तत्तद्भावनात्मककलानामभावेन चिदात्मपुरुषभावं प्राप्येत्यर्थः । प्रोच्यते तत्त्वज्ञैः । स सकल एवैवमेषोऽकलो भवति पुरुषः । त्यजत्येव हि कथंचित्स्वभावं प्रतिबोधितो मृगराजः स्वै

डकत्वभ्रमामिति भावः तदुक्तमाहमन्त्रः ॥५॥

अरा इव रथनाभौ कलायस्मिन्प्रतिष्ठिताः तं वेद्यं पुरुषं वेद यथामावोमृत्युः परिव्यथा इति ॥ ६ ॥

चक्रमध्यवर्तुलावयवेतिर्यगवयवा इव यत्र कलास्तं यूयं वेद वित्त यथा वो युष्मान्न मृत्युः परिव्यथयेत् । इति मन्त्रपूर्तौ ॥ ६ ॥

ईश्वर उवाच तानिति—

तान् होवाचैतावदेवाहमेतत्परं ब्रह्म वेद । नातः परमस्तीति ॥ ७ ॥

एतावदेव सर्वाधिष्ठानचिन्मात्रमेव परं ब्र-

ह्याहं जानाम्यऽस्त्यपिनान्यदतः किञ्चिदि-
त्युवाच षडुक्तशिष्यान्पिप्पलादः ॥ ७ ॥

**ते तमर्चयन्तस्त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसीति । नमः परमऋषिभ्यो नमः परमऋषिभ्यः ॥ ८ ॥**

भद्रं कर्णेभिरिति शान्तिः । त्वमेव नोऽस्माकं पिता पाता रक्षकः यतो यस्त्वमस्मदविद्यामहोदधेः परं दूरगमसंस्पृष्टमभयं पारं विद्यादेश मस्मान्प्रापयसीत्यर्चयन्तस्सत्कुर्वन्तस्तं पिप्पलादं परमसूक्ष्मतत्त्वज्ञेभ्यो नमः परमऋषिभ्यो गुरुभ्यो भवद्भ्य इत्युक्तिपुरस्सरं नमश्च क्रुस्ते शिष्याः अथवा पुष्पादिभिस्तमर्चयन्तस्त्वं हीत्याद्यु-

क्त्वेति हेतोर्नमो भवद्भ्य इत्यूचुस्ते शरीरं प्रणिपात्य पुरः नास्ति ब्रह्मविद्यायास्तुल्यं मूल्यं ब्रह्माण्डमण्डलेन्यत्किञ्चिदितिभावः आवृत्तिरादरग्रन्थपूर्त्योः ॥ ८ ॥

दययाऽन्तरामस्य मृदुर्ग्रन्थोयमुम्भितः ।
श्रीस्वामिभास्करानन्दैः काश्यांप्रश्नाख्यवेदके ॥ १ ॥
कृशामद्धीः क भाष्येण क वेदान्ताब्धिमन्थनम् ।
तथाप्यऽघटितं किं वा गुरुदेवदयालवे ॥ २ ॥

इत्युपनिषत्प्रसादेप्रश्नोपनिषत्प्रश्नश्चषष्ठः ।



# श्रीगणेशायनमः ॥

अथाऽलब्ध शरणाऽत्यन्त संतप्तजन संसृति ज्वलन संताप मपा कर्तुमुपायान्तरा ऽलाभेन वस्तु वुबोध यिषया ऽथर्वाम्नाये मन्त्रान्विभावयिष्यन्नुपायमहत्त्वायोपायप्रवृत्तिसंप्रदायमादौ वदतीश्वरो ब्रह्मेत्यादि । अस्य च शिरोव्रतिभिरध्येतव्यत्वान्मुण्डकेत्याख्या ॥

ॐ भद्रं कर्णेभिरिति । ॐ स्वस्ति न इन्द्रो वृद्धश्रवा इति चाद्यन्तयोः शान्तिः ३।

ब्रह्मादेवानां प्रथमः संबभूव विश्वस्य कर्त्ता भुवनस्य गोप्ता । स ब्रह्मविद्यां सर्व विद्या प्रतिष्ठामथर्वाय ज्येष्ठ पुत्राय प्राह ॥ १ ॥

जगतो जनको लोकस्य पालकश्च यो देवानां मुख्य आद्यो वा ब्रह्मा स्वयम्भूः स सर्वविद्यानामाश्रयं मूलं ब्रह्मविषयां विद्यां कदाचिदथर्वाख्यायाह ॥ १ ॥

**अथर्वणेयां प्रवदेत ब्रह्माथर्वातां पुरो वाचाङ्गिरे ब्रह्मविद्याम् । स भारद्वाजाय सत्यवहाय प्राह भारद्वाजोङ्गिरसे परावराम् २ ॥ २ ॥**

सकल परावर विद्या मूल तयायांपरा वरां ब्रह्माथर्वायाऽवदत्तामथर्वो ऽङ्गिर्नाम्ने सोऽङ्गि भरद्वाजगोत्राय सत्यवहनाम्ने स चाऽङ्गिरसे पुत्राय शिष्याय वाह ॥ २ ॥

**शौनकोहवै महाशालो ऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ**

**कस्मिन्नु भगवो विज्ञाते सर्व-मिदं विज्ञातं भवतीति ॥ ३॥**

महाशालो महा गृहस्थः । समित्पाणि त्वादिविधिवत् । नुवितर्के । हे भगवन् । ज्ञातुमशक्यमिदमनन्तं जगत्कस्मिन्ननुभूते स्वरूपतो बुद्ध्यारूढं भवेदर्थात्तदेकं वस्तु ब्रूहीति पप्रच्छ ह प्रसिद्धो वैस्मर्यमाणः शौनकः ॥ ३ ॥

**तस्मै सहोवाच द्वे विद्ये वे-दितव्य इति हस्म यद्ब्रह्म वि-दो वदन्ति पराचैवा परा च ॥**

द्वे विद्ये ज्ञेयस्त इति सोऽङ्गिरा आह । केते । ह प्रसिद्धं यद्विद्या द्वयं ब्रह्मज्ञा वदन्ति स्मर्यते च तत्पराचा ऽपराचेति । प्रश्नाननुरूपाऽपरोक्तिस्तु तुच्छ विषयेयमिति बोधनेन परत्र शिष्य बुद्धे र्निनीषया ॥ ४ ॥

तत्रा ऽपरा ऋग्वेदो यजुर्वे-
दः सामवेदो ऽथर्व वेदः शिक्षा
कल्पो व्याकरणं निरुक्तं छन्दो
ज्योतिषमिति । अथ परायया
तदक्षरमधिगम्यते ॥ ५ ॥

वेदास्तदङ्गानि च परभिन्नविषयत्वादप-
रा । यया च शुद्धचिन्मात्रवृत्त्याक्षरमविना-
श्यं तद्ब्रह्म साक्षात्क्रियते सापरा । वि-
चारिता वेदान्तवेदाद्या अप्युक्त परवृत्ति
जनका एवेति ना परोक्तिरसङ्गता ॥ ५ ॥

ज्ञानं च यथा वस्तु भवतीत्युक्ताक्षर
ब्रह्म विशेषणान्याह यत्तदिति—

यत्तदद्रेश्यमग्राह्यमगोत्रम-
वर्णमचक्षुःश्रोत्रं तदपाणिपा-
दम् । नित्यं विभुं सर्व गतं

सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः ॥ ६ ॥

ज्ञानेन्द्रियाविषयम् । कर्मेन्द्रियाविषयम् । अकारणम् । शुक्लत्वादिशून्यम् । ज्ञानकर्मेन्द्रियहीनम् । सनातनम् । विविधविश्वरूपम् । व्यापकम् । सूक्ष्ममम् । अपक्षयरहितम् । सर्वभूतकारणम् । एतादृशं यद्धीराः पश्यन्ति तदुक्तमक्षरं ब्रह्म यया गम्यते सापरेति पूर्वेण संबन्धः ॥ ६ ॥

उक्ताखिलकारणत्वं दृष्टान्तैः स्फोरयति यथेति—

यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः संभवन्ति । यथा सतः पुरुषात्केशलोमानि तथा क्षरात्संभवतीह विश्वम् ॥ ७ ॥

लूताऽऽख्यजन्तुः स्वरूपभूततन्तूनुत्पादयत्यत्ति च । पृथिवीरूप व्रीह्यादयो जायन्ते भुवि लीयन्ते च । सतो जीवतः केशादि च यथा तथा चिन्मात्रोपादानाज्जगत् ॥ ७ ॥

जगदुत्पत्तिक्रममाह । तपसेति—

**तपसा चीयते ब्रह्म ततोऽन्नमभि जायते । अन्नात्प्राणो मनः सत्यं लोकाः कर्मसु चामृतम् ॥ ८ ॥**

लीनजगद्विषयकबहुस्यामित्याद्याकारज्ञानात्मतपसा शक्तिप्रथमकार्येण युज्यते ब्रह्म प्रथमम् । ततस्तादृशाद्ब्रह्मणश्चिकीर्षादार्ढ्येन स्थूलकार्योन्मुखतया किंचिदभिव्यक्तशक्तिस्वरूपरूपमन्नमुत्पद्यते । तस्माद्धिरण्यगर्भस्तस्मान्मनस्तस्मात्पञ्चभूतानि-

तेभ्यो भुवनानि जनाश्च जनेभ्यः कर्माणि तेभ्यः फलम् ॥ ८ ॥

उक्तमेव सङ्क्षिप्याह य इति—

**यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः । तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते ॥ ६ ॥**

यस्सामान्येन सर्वज्ञो विशेषतश्च सर्वं वेत्ति यस्य चोक्तज्ञानरूपं तपस्तस्मात्परमात्मनो हिरण्यगर्भाख्यं ब्रह्म नाम च रूपं चान्नं च व्रीह्यादि। यथा पथिकं प्रधानग्रामा एवोच्यन्ते गन्तुं गतिस्तु क्रमेणैव तथोत्पत्तिस्तु पूर्वमन्त्रोक्तक्रमेणैव ॥ ९ ॥

इति प्रथममुण्डके प्रथमखण्डः ॥ १ ॥

---

साङ्गवेदजापराविद्याविषयमथाह
विरागाय तदेतदिति—

**तदेतत्सत्यं मन्त्रेषु कर्माणि**

**कवयो यान्यपश्यँस्तानि त्रे-**
**तायां बहुधा सन्ततानि । ता-**
**न्याचरथ नियतं सत्यकामा ए-**
**ष वः पन्थाः सुकृतस्य लोके ॥**

तदेतद्विहितं कर्म सत्यमवश्यफलदम् । किंच कविभिर्वसिष्ठाद्यृषिभिर्वेदमन्त्रेषूहितानि यानि तानि च कर्माणि क्रमेणर्ग्यजुस्साम विहितकर्मकर्तॄणां होत्रध्वर्यूद्गातॄणां समाहारे त्रेतायां बहुधाऽनुष्ठितानि प्रसिद्धानि प्रामाणिकानि चेति यावत् । अतो यथार्थ कर्म फलकामना यूयं नियतं सदानियमेन वातान्येव कुरुध्वम् । एष कर्मरूपो वः पन्थाः सुष्ठु कृतस्य कर्मणो लोके फलनिमित्तं फलाप्तय इति यावत् ॥ १ ॥

अग्निहोत्रं विशेषं पन्थानमाह यदेति—

**यदा लेलायते ह्यर्चिः समि-**

द्धे हव्यवाहने । तदाज्यभागा-
वन्तरेणाहुतीः प्रतिपादयेत् ॥

समिद्धे प्रज्वलिते आहवनीयाग्नौ यदाऽ
र्चिः शिखालोलं भवति तदा दक्षिणोत्तरपा-
र्श्वयोरग्नेराहुती आज्यभागाख्ये दत्त्वा तन्म-
ध्ये सूर्याय स्वाहा प्रजापतये स्वाहेति प्रा-
तः अग्नये प्रजापतये इति सायमाहुतीर्द-
द्यात् ॥ २ ॥

दुष्करत्वं दुखदत्वं चा स्य पथ आह
यस्येति ।

यस्याग्निहोत्रमदर्शमपौर्ण-
मासमचातुर्मास्य मनाग्रयण
मतिथिवर्जितं च । अहुतम-
वैश्वदेवम विधिनाहुतमासस-
मांस्तस्य लोकान्हिनस्ति॥३॥

दर्शपौर्णमासचातुर्मास्यैश्शारदवासन्तनवान्नेष्ट्या ऽहरहोंतिथिपूजनवैश्वदेवकर्मभ्यां राहितं स्वकाले न हुतमविधिना वा हूतं यस्याग्निहोत्रं भवति तस्य भूरादिसत्यान्तान्प्रपितामहादि प्रपौत्रान्तान्वालोकान्नाशयति तदग्निहोत्रम् । निष्फलं सन्ततिच्छेदकं वा भवतीति भावः ॥ ३ ॥

समिद्धतम एवाग्नौ होमश्शुभफल इति सूचनाय प्रसङ्गाद्वाग्नि जिह्वाः काल्यादि विश्वरुच्यन्ता आह कालीति—

**काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा । स्फुलिङ्गिनी विश्वरुची च देवी लेलायमाना इति सप्तजिह्वाः ॥ ४ ॥**

लेलायमानाः प्रदीप्ताहुतग्रसनाय चञ्चला वा ॥ ४ ॥

जिह्वोद्गमोहिताग्निन्याप्तास्यहोमप्रशंसा माहैतेष्विति—

एतेषु यश्चरते भ्राजमानेषु यथा कालं चाहुतयो ह्याददायन्। तं नयन्त्येताः सूर्यस्य रश्मयो यत्र देवानां पतिरेकोऽधिवासः ॥ ५ ॥

एतासु दीप्यमानजिव्हासु यो होमकाले होमं कुरुते तं ह्याददानास्सूर्यकिरणरूपास्सत्य इमा आहुतयस्तत्र नयन्ति यत्रेन्द्रोऽधिवसति ॥ ५ ॥

प्रापण प्रकारमाहैहीति—

एह्येहीति तमाहुतयः सुवर्चसः सूर्यस्य रश्मिभिर्यजमानं वहन्ति। प्रियां वाचमभि-

**वदन्त्योर्चयन्त्यः एषवः पुण्यः सुकृतो ब्रह्मलोकः ॥ ६ ॥**

एह्येह्यागच्छाऽऽगच्छैष युष्माकं कृतपुण्यपरिणामः स्वर्गलोकं इत्यादिप्रियवागादिभिः पूजयन्त्यः सुवर्चसो दिव्या आहुतयस्तं यजमानं सूर्यरश्मिद्वारा नयन्ति ६ निन्द्यते स्वयमीश्वरेण केवलं कर्म प्लवाइति—

**प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म । एतच्छ्रेयो येभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापि यन्ति ॥ ७ ॥**

यज्ञरूपा दुःखोत्तरणायैते प्लवा नावो हि निश्चयेनादृढाः कुतो यतो येषु यज्ञेषु षोडशर्त्विजोयजमानस्तत्पत्नीचेत्यष्टादशसा-

ध्यं कर्मावरं न्यूनमुत्तमकल्पेऽधिकोक्तेः तथा च बहुसाधनसाध्यं नौकादिवदवश्यं विनाशीति भावः । तस्मादेतत्कर्म श्रेयस्साधनं ये मन्यन्ते ते म्रियन्ते पुनः पुनः ॥ ७ ॥

उक्तमेव विषयरागिदुःखं वर्णयत्यरागा
याविद्यायामिति—

**अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितं मन्यमानाः । जङ्घन्यमानाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः ॥ ८ ॥**

अन्तरे मध्ये । अन्धप्रदर्शितमार्गा अन्धा इवोक्तविधा मूढा अविवेकिनो नैकदुःखैर्हन्यमानाः पीडिताः परिभ्रमन्त्येव नाना लोकयोनिर्गतेषु ॥ ८ ॥

अतृप्ता एव ते तावद्विषयैर्वियुज्यन्ते

इत्याहाविद्यायामिति—

अविद्यायां बहुधा वर्तमाना वयं कृतार्थाः इत्यभिमन्यन्ति बालाः यत्कर्मिणो न प्रवेदयन्तिरागात्तेनातुराःक्षीणलोकाश्च्यवन्ते ॥ ९ ॥

मूलाऽविद्यास्थाः कर्मिणोऽज्ञा यद्यस्मात् स्वर्गादिभिरेव वयं कृतार्था इति मन्यन्ते विषयरागात् चित्तत्त्वत्तु न जानन्ति तेन क्षीणपुण्या अतुरास्सन्तप्ता विवशाः स्वर्गादेः पतन्ति ॥ ९ ॥

उक्तमेवाह विरागदार्ढ्यायेष्टेति—

इष्टा पूर्तं मन्यमानावरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः नाकस्य पृष्ठे ते सुकृते ऽनुभू-

त्वेमं लोकं हीनतरं वा विशन्ति ॥ १० ॥

इष्टं श्रौतंकर्म। स्मार्तं कूपारामादिपूर्तम् । वरिष्ठं मुख्यम् । अन्यच्चिदात्मज्ञानम् । पृष्ठे उपरिस्थले । सुकृते पुण्यकृते । कर्म फलमनुभूय। इमं नृदेहं शूकरादि वा ॥ १०॥

कर्मोपासनं च द्वयं कुर्वतः फलमाह तपइति—

तपः श्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्ष्य चर्यां चरन्तः । सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स पुरुषोह्यव्ययात्मा ॥ ११ ॥

अरण्येवानप्रस्थागृहस्था वा शान्ताः जितेन्द्रिया विद्वांसः सन्यासिनो वा भिक्षुकाये नाना विधतपो हिरण्यगर्भाद्युपासने

ह्युपवसन्ति कुर्वते ते विगत दुष्कृत रजसः सूर्यमण्डलेन तत्र यान्ति यत्राऽऽसंसारस्थितिं मृत्यपक्षयहीनो हिरण्यगर्भः ॥ ११ ॥

अथ विरक्तस्यपरविद्याधिकारायाह परीक्ष्येति—

**परीक्ष्य लोकान्कर्म चिता-न्ब्राह्मणो निर्वेदमायान्नास्त्य कृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्म निष्ठम् ॥१२॥**

लोकानखिलं जगत् कर्मोत्पादितानानित्यानिति यावत् प्रत्यक्षाद्यैर्निश्चित्यलोकेषु स्थितं रागं विनाशयेद्ब्राह्मण इत्युपलक्षण निर्देशः प्रधानत्वात् । ततो कृतोऽकार्यश्चिदात्मा तु कृतेन कर्मणा लभ्योनास्तीति तस्य ज्ञानाय वेदज्ञं परब्रह्मज्ञं गच्छेत् ज्ञानमेव तल्लाभोपाय इति भावः ॥ १२ ॥

गुरुकृत्यमाह तस्मा इति—

तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय । येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् ॥ १३ ॥

ईदृशं विगतान्तःकरणरागमानादिदोषाय जितेन्द्रियाय येनोपायेन सत्यं वस्तु वेद शिष्योविद्यात्तां ब्रह्मविद्यां ब्रह्मविज्ञानं तत्त्वतो याथातथ्येन प्रोवाचोपदिशेत् ॥

इति मुण्डकोपनिषत्प्रसादे प्रथममुण्डकं तद्द्वितीय खण्डश्च ॥ २ ॥

---

अथ यस्मिन्विज्ञाते सर्वंविज्ञातंभवाति तत्पर विद्याविषयब्रह्मबोधायारभते तदेतदिति—

तदेतत्सत्यं यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्र-

शः प्रभवन्ते सरूपाः । तथाक्षराद्विविधाः सोम्यभावाः प्रजायन्ते तत्र चैवापि यन्ति ॥ १ ॥

तदुक्तमेतदक्षरमेव सत्यमन्यत्र तु सत्यत्वमापेक्षिकमिति भावः । हे सोम्यप्रियमूर्तें शौनक । अग्निकणाइव कारणरूपा एव जीवादयो जायन्ते लीयन्ते तत्रैव । नीरतरङ्गयोरिव भेदानुभवो भ्रम इति परमानिष्कर्षः ॥ १ ॥

कार्योपलक्षितकारणं सोपाधिकमेवेति निरुपाधिकं ब्रह्म स्वरूपमाह दिव्य इति—

दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः । अप्राणो

ह्य मनाः शुभ्रो ह्यक्षरात्परतः परः ॥ २ ॥

कार्यं मात्रात्परतः परस्माद्व्यक्तरूपाद्विना ज्ञानमक्षरान्मायोपाधेः परः पुरुषो दिव्योऽलौकिको निखिल वाह्यान्तरपदार्थैस्सह वर्तते सकलाधिष्ठानमितियावत् मनः प्राणाऽऽकारजन्मादिविकाराभावाच्छुभ्रः शुद्धः । तत्र प्रतीताकारणतात्वौपाधिक्यधिष्ठानतयेतिभावः ॥ २ ॥

उक्तशुद्धत्वदाढ्यायाऽखिलाधिष्ठानत्वं ब्रह्मणआहे तस्मादिति—

एतस्माज्जायते प्राणोमनः सर्वेन्द्रियाणि च । खं वायु ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥ ३ ॥

एतस्मान्मायोपाधिकात्प्राणोहिरण्यग-

र्भः । क्रमोत्राऽविवक्षितः सृष्टिस्तु खाद्यैवेतियथान्यत्रमेवज्ञेयम् । अयं भावः अतर्क्यप्रत्यायिकैव हि माया सा च स्वतोऽनाद्यध्यस्ता तयाचाखिलमीशत्वादीति । शुद्धमेवेत्थं मायादिजगदाद्याकारेण क्रमेणा क्रमेण वा भातीति तु परम निष्कर्षः ॥ ३ ॥

विराडपि तज्जत्वात्सएवेत्याहाग्निरिति—

**अग्निर्मूर्द्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्यपद्भ्यां पृथिवीह्येष सर्वभूतान्तरात्मा ॥ ४ ॥**

अग्निर्द्युलोकः । विवृताउच्चरिताः । विश्वं जगत् हृदयं मनोऽस्याक्षरपुरुषस्येति सर्वत्र योज्यम् । पद्भ्यांजातेतिशेष पद्रूपेति भावः अन्तरात्माप्येष एव सर्व भूतस्य ॥ ४ ॥

गर्भजाअप्यक्षरजा एवेति क्रममाह

तस्मादिति—

**तस्मादग्निः समिधो यस्य सूर्यः सोमात्पर्जन्य ओषधयः पृथिव्याम्। पुमानेतः सिञ्चति योषितायां वह्वीः प्रजाः पुरुषात्संप्रसूताः॥ ५॥**

समिध्यतेहि सूर्य रूप समिद्भिर्द्युलोकः सोऽग्निस्तस्मादक्षरपुरुषाज्जायते इत्युक्तम्। द्युलोकाग्निजात्सोमान्मेघोऽग्निः। तस्माद्भुव्यग्नावन्नम्। अन्नजंरेतः सिञ्चतिस्त्रियामग्नौपुमानग्निः। एवमक्षरपुरुषात्प्रजाजाताः॥ ५॥

कर्मतत्फलसाधनेचाक्षरा देवेत्याह

तस्मादिति—

**तस्मादृचः साम यजूँषि दी-**

क्षा यज्ञाश्च सर्वे क्रतवो दक्षिणाश्च । संवत्सरश्च यजमानश्च लोकाः सोमो यत्र पवते यत्र सूर्यः ॥ ६ ॥

नियताक्षरच्छन्दस्का ऋचः । हिङ्कारप्रस्तावोद्गीथ प्रतिहारनिधनाख्य पञ्चावयवादि विशिष्टं साम। अनियताक्षरपादावसानं वाक्यरूपं यजुः । दीक्षा कर्तुर्नियमाः । अयूपो यज्ञस्सयूपः क्रतुः । येषु चन्द्रः पुनाति भाति रविस्ते दक्षिणोत्तरमार्गद्वयगम्याः फलभूता लोकाः ॥ ६ ॥

अन्यदप्यखिलं तस्माद्देवेत्याहत्रिभिः—

तस्माच्च देवा बहुधा संप्रसूता साध्या मनुष्या पशवो वयांसि। प्राणापानौ व्रीहियवौ

**तपश्च श्रद्धा सत्यं ब्रह्मचर्यं विधिश्च ॥ ७ ॥**

वस्वादि गण भेदेन नाना विध देवाः । साध्यादेवविशेषाः वयः पक्षी । श्रद्धाऽऽस्तिक्यबुद्धिः । विधिः क्रियाप्रकारः ॥ ७ ॥

**सप्तप्राणाः प्रभवन्ति तस्मात्सप्तार्चिषः समिधः सप्त होमाः । सप्तइमे लोकायेषु चरन्ति प्राणा गुहाशया निहिताः सप्त सप्त ॥ ८ ॥**

गुहाशयाः स्वापे हृल्लयाः प्रतिप्राणिनं सप्त सप्त धात्रा निहिताः स्थापिताः शिरःस्थाः प्राणा इन्द्रियाणि । तेषां स्व विषय प्रकाशनानि च । समिधो विषयाः । होमाविषयज्ञानानि । येषु चरन्ति ते लोकाः स्थानानि ॥ ८ ॥

अतः समुद्रा गिरयश्च सर्वे ऽस्मात्स्यन्दन्ते सिन्धवः सर्व रूपाः । अतश्च सर्वा ओषधयो रसश्च ये नैषभूतैस्तिष्ठते ह्यन्तरात्मा ॥ ९ ॥

सिन्धवो नद्यः । रसो मधुरादिः । येन रसेन पृथ्व्यादिभिर्वेष्टितो ऽन्तरात्मा लिङ्ग देहस्तिष्ठति ॥ ९ ॥

फलितमाह पुरुष इति—

पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम् । एतद्यो वेद निहितं गुहायां सोऽविद्या ग्रन्थि विकिरतीह सोम्य ॥ १० ॥

हे सोम्यप्रियमूर्त्ते पुरुषएवाखिलकार-

णं चेत्तज्ज्ञानादेव ध्यान कर्म फल भूतमिदं सर्वं पुरुष एवेति पुरुष रूपतया ज्ञातं भवति हेमज्ञानाद्धेमतयाऽखिल हैममिव । पुरुषश्च ब्रह्मेति सर्वं ब्रह्म । तथाच यो हृदिस्थितमेतद्ब्रह्म वेदस्वेन सहाखिलं ब्रह्म जानातीति यावत् सोऽविद्यावन्धमिह जीवन्नेव विनाशयति । अधिष्ठानचिद्बोधात्सात्म प्रपञ्च प्रतीतिर्निवर्तत इति भावः ॥

इति मुण्डकोपनिषत्प्रसादे द्वितीय मुण्डक प्रथम खण्डः ॥ १ ॥

---

अथ कारणविज्ञानोपायायाहाविरिति—

**आविः सन्निहितं गुहाचरन्नाम महत्पदमत्रै तत्समर्पितम् । एजत्प्राणन्निमिषच्च यदे तज्जानथ सदसद्वरेण्यं परं विज्ञानाद्यद्वरिष्ठं प्रजानाम् १**

हे शिष्या यदेतदुक्तं सर्वकारणं ब्रह्म जानथ यच्च वरिष्ठमतिश्रेष्ठं तन्महत्पदमनन्तमास्पदम् यत एजत्पक्ष्यादि प्राणन्मनुष्यादि निमिषत्क्रियावज्जङ्गमं चात्स्थावरं सदसत्कार्यं कारणं चाखिलमेतदत्रैवार्पितं प्रोतम् । तदेव च गुहाचरमाभासरूपेण हृद्गतं नाम प्रसिद्धम् । अतः सन्निहितमाविः प्रत्यक्षं च बोधात्मना न तु बोध्यात्मना यतः प्रजानां विज्ञानात्परं नतद्विषयः एवञ्चात्मतयैवैतद्वरणीयं विज्ञेयमात्मत्वाद्वा सर्वैः प्रार्थनीयमित्यर्थः ॥ १ ॥

उक्तमेवादरेण दार्ढ्यायवाह यदिति—

यदर्चिमद्यदणुभ्योऽणु च यस्मिन्लोका निहिता लोकिनश्च । तदेतदक्षरं ब्रह्म स प्राणस्तदुवाङ्मनः तदेतत्सत्यं त-

दमृतं तद्वेद्धव्यं सोम्यविद्धि २

राहो: शिरइतिवद्यदर्चिमद्भारूपमणु सर्वास्पदं तदनपक्षयं ब्रह्म। प्राणो वाङ्मनश्च तदेव तदाश्रयकमिति भावः तदेव च सत्यममृतम्। अतो हे सौम्य तदेव वेद्धव्यं चेतसा भावनीयं त्वं विद्धि जानीहि ॥२॥

वेधनप्रकारमाह धनुरिति—

धनुर्गृहीत्वौपनिषदं महास्त्रं शरं ह्युपासानिशितं सन्धयीत। आयम्य तद्भावगतेन चेतसा लक्ष्यं तदेवाक्षरं सोम्य विद्धि ॥ ३ ॥

उपनिषद्भवं महास्त्रं धनुरादाय तत्र ध्यानतीक्ष्णं दीप्तं शरं दध्यात्। ततो विषयान्तरादाकृष्य लक्ष्यानुसन्धानमयेन चेतसा लक्ष्यमुक्तमक्षरं जानीहि ॥ ३ ॥

धनुराद्याह प्रणव इति—

प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते । अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ॥ ४ ॥

मृगदेहादावा पुंखादि निमज्जनतया शरस्य लक्ष्येणैकत्वापादनमेव वेधनेन प्रसिद्धम् तथा प्रणवार्थविचारेणात्मानमभिन्नं ब्रह्मणा कुर्यात् ॥ ४ ॥

दुर्गमत्वात्पुनर्लक्ष्यं वर्णयति यस्मिन्निति—

यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः । तमेवैकं जानथ आत्मानमन्यावाचो विमुञ्चथामृतस्यैष सेतुः ॥ ५ ॥

प्राणैरिन्द्रियस्सह मनश्चौतं प्रोतम् । एकं ब्रह्माऽभिन्नं जानीत । एष एक्याव बोध एव मोक्षप्राप्तिसाधनम् । अतो हे शिष्या वाचो परविद्याः ॥ ५ ॥

किञ्चिन्मालिनधियं प्रत्युपासनमाहारा

इति—

**अरा इव रथनाभौ संहता यत्र नाड्यः स एषोन्तश्चरते बहुधा जायमानः । ओमित्येवं ध्यायथ आत्मानं स्वस्ति वः पराय तमसः परस्तात् ॥ ६ ॥**

यत्र हृदि संहता अर्पितमूलाः तत्रान्तर्मध्ये स उक्त एष आत्मा धीवृत्तिभेदेन दृष्टो द्रष्टेत्यादि वहुधा जात इव चरते प्रती-

यते न वस्तुतः तस्मात्तमसो ऽविद्यायाः प-
रस्ताद्यत्परं वस्तु तद्भावाय प्रणवमात्मत्वेन
ध्यायथ । एवमपि युष्माकं स्वस्ति निर्विघ्न-
फलाप्तिर्भवत्वित्याशीर्वचनं गुरोः ॥ ६ ॥

योऽविद्यायाः परस्तात्सकुत्रास्तीत्यत
आह य इति—

यः सर्वज्ञः सर्वविद्यस्यैष म-
हिमा भुवि दिव्ये ब्रह्मपुरे ह्येष
व्योमन्यात्मा प्रतिष्ठितः ।
मनोमयः प्राणशरीरनेता प्र-
तिष्ठितोऽन्ने हृदयं सन्निधाय
तद्विज्ञानेन परिपश्यन्ति धी-
रा आनन्दरूपममृतं यद्वि-
भाति ॥ ७ ॥

भुवि लोके एष प्रसिद्धः सर्वजागत-म-

र्यादारूपो महिमा यस्य स एष आत्मा ब्रह्म नगरे हृदि यद्व्योम तत्र प्रतिष्ठितो वर्तते प्रतीयते केनातो विशेषणं मनोमयः मनसेति यावत् । स्थूलदेहातिरिक्तं मन आद्येव नास्तीत्यत आह प्राणस्येन्द्रियादेः शरीरान्तरंप्रति नेता प्रापकः नान्यथा जन्मान्तरं स्यादिति भावः परमात्मविभावनं तु देहद्वयसङ्घात एवेत्याह अन्नेऽन्नमये स्थूले हृदयं सन्निधाय प्रतिष्ठितः प्रतीयते । अप्रसिद्धिं वारयति यदानन्दरूपं हृदि भाति प्रकाशते तद्धीरा विवेकिनः पश्यन्ति ॥७॥

दर्शनफलमाह भिद्यत इति

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥ ८ ॥

परं कारणमवरं कार्यं सर्वमात्मैवेति तद्रूपे तस्मिन्परात्मनि दृष्टे साक्षात्कृतेऽस्य मुमुक्षोः । ग्रन्थिश्चिज्जडोभयभावना भिद्यते चिद्भावेनैव भवति । संशयाश्चिदेकत्वविषयाः । कर्माणि तत्त्वविद् दृष्ट्या त्रिविधान्यन्यदृष्ट्या रब्धान्यानि ॥ ८ ॥

उक्तमेव परं निश्चयाय पुनराह
हिरण्मय इति—

**हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम् । तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः ॥ ६ ॥**

चिदाभासस्थानत्वाद्धिरण्मयं परमुत्कृष्टं खड्गकोश इव च यद्धृदयं तत्र यन्निर्मलं निरवयवमतः शुभ्रं केवलं प्रकाशानां प्रकाशकं ब्रह्म तदात्मविद एव जानन्ति नाऽनात्मरता इति भावः ॥ ९ ॥

प्रकाशप्रकाशकत्वमाह नेति—

न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतो यमग्निः। तमेव भान्तमनुऽभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥ १० ॥

सूर्यादयस्तत्र ब्रह्मात्मनि घटादाविव भासका न भवन्ति किन्तु तमेव बोधात्मना स्फुरन्तमनुपश्चात्सर्वं सूर्यादिवस्तु भाति बुध्यते न चिदाभासमन्तरा किंचिद्भातीति भावः। तस्येति तादात्म्ये षष्ठी वस्तुतस्तु अधिष्ठानतद्ब्रह्मचित्सत्तयैव जगद्भाति शुक्तिरूप्यवदित्यर्थः ॥ १० ॥

उक्ताखिलोक्तिफलितमद्वैतमाह ब्रह्मेति—

ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म

पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण ।
अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवे-
दं विश्वमिदं वरिष्ठम् ॥ ११ ॥

पुरः प्रसृतं प्रतीतं यदिदं किंचित्तदमृ-तं सद्रूपं ब्रह्मैव एवमग्रेऽपि। किं बहुना ना-हिः किन्तु रज्जुरितिवत् विश्वमखिलमिदं जगन्न किं तर्हि वरिष्ठमपरिच्छिन्नमिदमुक्तं ब्रह्मैव ॥ ११ ॥

इति मुण्डकोपनिषत्प्रसादे द्वितीयमुण्डकं सद्वितीयखण्डम् ॥ २ ॥

---

अथोक्तपरविद्यावोध्यब्रह्मणोदर्शने सहकारि सत्यादि वक्ष्यन्नादौ शुद्धचिद्ब्रह्म विवेकोपा-यान्तरमाह द्वेति—

द्वा सुपर्णा सयुजा सखाया
समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्य

नश्नन्नन्यो अभिचाकशीति १

सखायौ प्रीतावातः सयुजौ संयुक्तौ सुपर्णौ पक्षिणौ फलभोगाय यथैकमश्वत्थवृक्षमाश्रयतस्तथा चिद्बिम्बतत्प्रतिबिम्बौ शारीरमिति प्रतीत्युक्तिः । अन्यः प्रतिविम्बो जीवः । पिप्पलं देहवृक्षजकर्म फलं दुःख सुखमत्तिदुःख्यहमिति मन्यते । अनश्नन्दुःखाद्यसंस्पृष्टोऽभिचाकशीत्यतिशयेन प्रकाशते केवलं साक्षिवत् ॥ १ ॥

जीवपक्षिणो भोक्तृत्वावधिमाह समान इति—

समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥ २ ॥

अनीशया ऽविद्यया मुह्यमानः सदसद्वि-
वेकहीनोऽतएव वृक्षे देहे निमग्नोयमेवाहमि-
ति निश्चयी पुरुषस्तत्तद्दुःखे हा दैव हा पि-
तः किमिदं जातमिति शोचति । अथ य-
दा महात्मभिर्जुष्टं सेवितं परिचितमन्यं स-
च्चिद्बिम्बरूपमीशं रज्जुसर्पस्रगादिवदस-
ज्जगद्रूपमस्येशस्य महिमानं च पश्यति
निश्चिनोतीति हेतोस्तदाऽशोको भवति मु-
च्यते ॥ २ ॥

उक्तमेव स्फुटमाह यदेति—

**यदा पश्यः पश्यते रुक्म-
वर्णं कर्तारमीशं पुरुषं ब्रह्मयो-
निम् । तदा विद्वान्पुण्यपापे
विधूय निरञ्जनः परमं सा-
म्यमुपैति ॥ ३ ॥**

पश्यो विचारनिरतो मुमुक्षुर्यदाऽखि-

लस्य कर्त्तारं धातुरपि योनिमीशं पुरुषं हेमवर्णं चिद्रूपं साक्षात्करोति कार्यं न कारणान्यतत्वमित्येकत्वभावं गच्छति तदा जन्मप्रदाऽखिलपुण्यपापहीनः शुद्धः साम्यं ब्रह्मतामुपैति ॥ ३ ॥

उक्तं विद्वांसं स्तौति प्राण इति—

**प्राणो ह्येष यः सर्वभूतैर्विभाति विजानन्विद्वान्भवते नातिवादी । आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठः ॥ ४ ॥**

यश्चिदात्मा सर्वभूतात्मना भाति एष एव सर्वेषां प्राणः सत्ताप्रदोऽधिष्ठानमित्येकत्वं जानन्विद्वांस्तत्त्ववेत्ताऽतिवाद्यनृतवक्ता न भवति किन्तु वाह्यसाधनैः क्रीड़ा प्रीतिमात्रं रतिश्चात्मन्येवास्येति ध्यानादि

सक्रिय एष तत्त्वविच्छ्रेष्ठः सत्यवक्तेति भावः ॥ ४ ॥

लौकिकसत्यवक्तृत्वादीनि तत्वज्ञान-सहकारीणीत्याह सत्येनेति—

**सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग् ज्ञानेन ब्रह्मचर्येण नित्यम् । अन्तः शरीरे ज्योतिर्मयो हि शुभ्रोयं पश्यन्ति यतयः क्षीणदोषाः ॥ ५ ॥**

रागादि दोषशून्यं संन्यासिनो निदिध्यासनेन यं साक्षात्कुर्वन्त्येष हृदिज्योतीरूपः शुद्धआत्मा मुमुक्षुणा नित्यं नतु कदाचित्कृतं यत्सत्यं मनोजयादि तपो ब्रह्मचर्यं च तैरन्तःकरणशोधकैः श्रवणादिजज्ञानेन च लभ्यः ॥ ५ ॥

सत्यं स्तौति सत्यमिति—

**सत्यमेव जयति नानृतं स-**

त्येन पन्थाविततो देवयानः । येनाक्रमन्त्यृषयो ह्याप्तकामा यत्र तत्सत्यस्य परमं निधानम् ॥ ६ ॥

लोकेपि प्रसिद्धिः सत्यमेव जयति जयहेतुरिति । आप्तकामा निर्वासना येन यान्ति स मार्गोपि शास्त्रोक्तिसत्यतयैव प्रसिद्धोस्ति प्राप्यते वा यथार्थवक्त्रैव । अतस्तेन पथा यत्र यान्ति तद्ब्रह्म सत्यनिधानं सत्याधीनं यस्य योनिधिस्सतदधीन इति प्रसिद्धम् ॥ ६ ॥

ऋषिप्राप्यं ब्रह्म वर्णयति बृहदिति—

बृहच्चतद्दिव्यमचिन्त्यरूपं सूक्ष्माच्च तत्सूक्ष्मतरं विभाति । दूरात्सुदूरे तदिहान्ति

के च पश्यत्स्विहैव निहितं गुहायाम् ॥ ७ ॥

तद्बृहदपरिच्छिन्नं दिव्यं स्वप्रभं मनोऽग्राह्यमतिसूक्ष्ममज्ञस्य दूरेज्ञस्यान्तिके यत इहैवात्मनिपश्यत्सुविचारयत्सुविवेकिष्वन्तःकरण एवात्मरूपतयैव निहितं स्थितं बिभाति ॥ ७ ॥

उक्तमेव पुनर्निश्चयार्थमाह नेति—

न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा । ज्ञानप्रसादेन विशुद्ध सत्त्वस्ततस्तुतं पश्यते निष्कलं ध्यायमानः ॥ ८ ॥

नान्यैर्देवैरिन्द्रियैरयोग्यत्वात् । यदा तु महता सुकृता शुद्धान्तःकरणो मुमुक्षुर्निर-

वयवं चिदात्मानं ध्यायति ततस्त्वखण्डचिदाकारज्ञानस्य प्रसादेनोत्पत्त्यातं चिदात्मानं साक्षात्करोति ॥ ८ ॥

ज्ञेयत्वभ्रमं वारयत्येष इति—

**एषोणुरात्मा चेतसा वेदितव्यो यस्मिन्प्राणःपञ्चधा संविवेश । प्राणैश्चित्तं सर्वमोतं प्रजानां यस्मिन्विशुद्धे विभवत्येष आत्मा ॥ ९ ॥**

यस्मिन्देहे पञ्चप्राणास्तत्रस्थेन चेतसा ज्ञेय आत्मेति प्रतीयते । वस्तुतस्तु प्राणैरिन्द्रियैः सहाखिलं प्राणिचित्तमात्मनौतं व्याप्तमेवातो विशुद्धे यस्मिँश्चेतसि निमित्तमात्रे विभवति स्वयं प्रकाशते विस्मृतकण्ठमणिरिवेति भावः ॥ ९ ॥

यस्य शुद्धे चित्ते स्वयमात्मप्रकाशस्तस्य

माहात्म्यमाह यमिति—

यं यं लोकं मनसा संविभाति विशुद्धसत्त्वः कामयते याँश्च कामान् । तं तं लोकं जयते ताँश्च कामाँस्तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः ॥ १० ॥

संविभाति संकल्पयति कामान्भोगान् जयते लभते । यतस्सत्यसंकल्पो जायते सतस्मात्तमन्योप्यैश्वर्यकामः पूजयेत् ॥ १० ॥

इत्युपनिषत्प्रसादे तृतीयमुण्डके प्रथमखण्डः ॥

---

मुमुक्षुभिरपि स पूज्य इत्याह स इति—

स वेदैतत्परमं ब्रह्मधाम यत्र विश्वं निहितं भाति शुभ्रम् । उपासते पुरुषं ये ह्यकामास्ते शुक्रमेतदतिवर्तन्ति धीराः ॥

यत्र धाम्नि स्थितं विश्वं जगद् ब्रह्मविदः शुभ्रं चिद्रूपं भाति तत्परंब्रह्मधाम स जानाति यतोतस्तं पुरुषं ये निष्कामाः सेवन्ते तेपि शुक्रं पितुःशरीरे वीर्यं नायान्ति जन्मार्थं किन्तु ज्ञानं प्राप्य मुच्यन्त इति भावः ॥ १ ॥

सकाम निष्कामत्वे बन्धमोक्षहेतू
इत्याह कामानिति—

**कामान्यः कामयते मन्यमानः सकामभिर्जायते तत्र तत्र । पर्याप्तकामस्य कृतात्मनस्त्विहैव सर्वे प्रविलीयन्ति कामाः ॥ २**

मन्यमानो विषयगुणान्ध्यायन्विषयानिच्छति यः स विषयवासनाभिः स्वर्गे नरके चोत्पद्यते । निष्कामस्य कृतब्रह्मत्वस्य

तु देह एव वासनालय इति हेत्वभावान्न जनिः ॥ २ ॥

ऐक्यज्ञानमेव ब्रह्मात्मत्वलाभोपाय इत्याह नेति—

**नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम् ॥३॥**

प्रवचनं वक्तृता मेधा ग्रन्थार्थधारणशक्तिः श्रुतमध्ययनम् । अभेदेन भावित एष आत्मा यं मुमुक्षुमभेदेन वृणुते संभजते 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमिति, स्मृतेः । तेन पुंसो ज्ञानेनेति यावत् । कथं तत्राह तस्य पुंसा हृदि तनुं चिद्रूपां विवृणुते निरविद्याऽऽवरणां करोति ॥ ३ ॥

चिदात्म विचारादि सहकारि साधनानि सूचयति नायमिति—

नायमात्मा बलहीनेन लभ्यो न च प्रमादात्तपसो वाप्यलिङ्गात् । एतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्मधाम ॥ ४ ॥

चिदेकपरत्वं बलम् । प्रमादोऽनात्मपरता । निष्कामतारूपमोक्षलिङ्गरहिताद्शास्त्रीयाद्वा तपसः । योबलनिष्कामतपोऽनात्मवासनात्यागै र्यतते स विद्वानात्मज्ञानं लभतेऽतस्तस्यात्मा ब्रह्म भवति ॥ ४ ॥

कथं भवति तत्राह संप्राप्येति—

संप्राप्यैनमृषयो ज्ञानतृप्ताः कृतात्मानो वीतरागाः प्रशा-

न्ताः । ते सर्वगं सर्वतः प्राप्य धीरा युक्तात्मानः सर्वमेवावि-शन्ति ॥ ५ ॥

एनमात्मानं संप्राप्य ज्ञात्वा तृप्तानिश्चित चिद्रूपारागादिहीना जितेन्द्रियास्ते धीरा वि-वेकिनः सर्वगमात्मानं सर्वत्र प्राप्य ज्ञात्वा तत्रैव युक्तात्मान एकीभूतास्तदतिरिक्त भा-वहीनाः सर्वमाविशन्ति पूर्णाभवन्ति । वि-देहकाले अपरिच्छिन्नतेत्याचार्योक्तिस्तु प्र-तीत्यभिप्रायेण ॥ ५ ॥

अनन्तरोक्तमेवादरेण पुनराह वेदान्तेति—

वेदान्तविज्ञानसुनिश्चिता-र्थाः संन्यासयोगाद्यतयः शु-द्धसत्वाः । ते ब्रह्मलोकेषु प-रान्तकाले परामृताः परिमु-च्यन्ति सर्वे ॥ ६ ॥

यतयो बलाद्युपायैर्यतनशीलाः संन्यासयोगात्सर्वैषणात्यागाच्छुद्धान्तःकरणवेदान्तविचारजज्ञानेन निश्चितैकचिदर्थाः ये ते सर्वे परामृता ब्रह्मरूपाः सन्तः परान्तकाले लिङ्गभङ्गकाले ब्रह्मरूपा ऽखिललोकेषु व्याप्नुवन्तीव ॥ ६ ॥

**गताः कलाः पञ्चदश प्रतिष्ठा देवाश्चसर्वे प्रतिदेवतासु । कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति ॥ ७ ॥**

प्रश्नोपनिषदन्त्यप्रश्नोक्ताः पञ्चदशकलाः प्रतिष्ठाः स्वस्वकारणं गता लीनाः इन्द्रियाधिष्ठातृ देवांशाश्च मुख्यदेवता व्यक्तिषुगता यदा भवन्ति तदाऽखिलकर्माणि प्रतिविम्बात्मा च चित्यभेदं यान्ति मुकु-

राऽपनये तदाऽऽभास इव ॥ ७ ॥

यथा नद्यः स्पन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान्नामरूपाद् विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ॥ ८ ॥

नद्यो यथा समुद्रभावं तथा ब्रह्मविद्दिव्यपुरुषभावं ब्रह्मत्वमुपैति ॥ ८ ॥

ब्रह्मविदः फलान्तरमप्याह स य इति ।

स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति नास्याऽब्रह्मवित्कुले भवति । तरति शोकं तरति पाप्मानं गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति ॥ ९ ॥

ब्रह्मैवेति सर्वात्मभूतत्वेन विघ्नाऽभावा-न्नान्यादिति भावः । ब्रह्मज्ञकुले ब्रह्मविदेव भवति । न शोकं पश्यतीष्टवियोगादिजं ब्रह्मवित् जन्मप्रदकर्मणा च न लिप्यते भिन्नहृदयग्रन्थिर्मुक्तो भवति ॥ ९ ॥

एतद् ग्रन्थाध्ययनाधिकारिणमाह
तदेतदिति—

**तदेतदृचाभ्युक्तम् । क्रियावन्तः श्रोत्रियाब्रह्मनिष्ठाः स्वयं जुव्हत एकर्षिं श्रद्धयन्तः । तेषामेवैतांब्रह्मविद्यां वदेत्शिरोव्रतं विधिवद्यैस्तु चीर्णम् १०**

तदेतद्विद्याऽधिकारकारिणंमन्त्रेणोक्तम् । श्रोत्रिया वेदपाठिनो वेदक्रियावन्तो ब्रह्मनिष्ठा मुमुक्षव एकर्षिसंज्ञाग्निं श्रद्धया जुहुते ये यैश्च शिरस्याग्निधारणरूपं व्रतं चीर्णं कृतं तेषामेवैतां वदेदिति ॥ १० ॥

अनुवादनमस्कार तदावृत्तिभिः पूर्त्तिं सूचयति तदिति—

तदेतत्सत्यमृषिरङ्गिराः पुरोवाच नैतदचीर्णव्रतो ऽधीते। नमः परम ऋषिभ्यो नमः परम ऋषिभ्यः ॥ ११ ॥

सत्यमक्षरं ब्रह्म ।उवाच शौनकाय । अकृतशिरोव्रतो न पठेत् । ब्रह्मविद्याप्रवर्तका ब्रह्मादयः परमर्षयः ॥ ११ ॥

दययाऽनन्तरामस्य मृदुर्ग्रन्थोयमुम्भितः ।
श्रीस्वामिभास्करानन्दैः काश्यां मुण्डकवेदके ॥१॥
कृशामर्द्धीः क्व भाष्येण क्व वेदान्ताब्धिमन्थनम् ।
तथाप्यघटितं किंत्वा गुरुदेवदयालवे ॥ २ ॥

इत्युपनिषत्प्रसादे मुण्डकोपनिषत्तृतीयमुण्डकं तद्द्वितीयखण्डश्च ॥

---

श्रीगणेशाय नमः ।

अथेश्वरो ऽथर्ववेदे लाघवेन मुमुक्षूद्धाराय जगद्विवर्ताधिष्ठानचितमुपदेक्ष्यञ्जगतश्च शब्दार्थरूपत्वाद्वाचारम्भणश्रुत्याच शब्दस्यैव निरूपणाच्छब्दमात्रस्य च प्रणवमूलकत्वात्प्रणवस्य चिद्बोधकत्वेन वातमोङ्कारमेवद्वारमुरीचकारोमितीति ।

भद्रंकर्णेभिरिति० भद्रं न इति० शान्तिः॥३॥

## ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानं भूतं भवद्भविष्यदिति सर्वमोङ्कार एव च । यच्चान्यत्त्रिकालातीतं तदप्योङ्कार एव ॥ १ ॥

इदं सर्वं जगदोङ्कारमात्रम् । तस्योमक्षरस्य । उपसमीपे ऽनन्तरमग्रे व्याख्यानं बो-

ध्यम् । त्रिषु कालेषु यज्जायते यच्च कालातीतं कालस्यापि कारणं सचित्प्रतिबिम्बाऽविद्यादितदोङ्कार एव नामार्थयोर्विवर्ताधिष्ठानयोश्चाऽभेदादित्यर्थः ॥ १ ॥

प्रणवतदर्थयोश्चाऽभेदायाह सर्वमिति ।

**सर्वं ह्येतद्ब्रह्मा ऽयमात्मा ब्रह्मसोयमात्मा चतुष्पात् ॥२॥**

येषामोङ्कारतोक्ता प्रणवश्चैतत्सर्वं ब्रह्म चित् चिद्विवर्तत्वात् । न कश्चन परोक्षो ब्रह्म पदार्थः किन्त्वयमात्मैव । अयमित्यन्तःकरणदेशाङ्गुलिनिर्देशः । चत्वारः पादाः कल्प्या भागाः कार्षापण इव यस्य सः ॥ ३ ॥

प्रथमपादादिं कल्पयति जागरितस्थान

इत्यादिना—

**जागरितस्थानो बहिः प्रज्ञः सप्ताङ्गः एकोनविंशतिमुखः**

**स्थूलभुग्वैश्वानरः प्रथमः पादः ॥ ३ ॥**

जागरितं स्थानं यस्य । आत्मनो बहिरनात्मनि विषये प्रज्ञा यस्य । अग्निहोत्रकल्पनायां द्युसूर्यवाय्वाकाशजलपृथिव्याहवनीयाख्यानि सप्ताङ्गानि मूर्द्धचक्षुष्प्राण देहमध्याकाशमूत्राशयपादमुखानि यस्य प्राणेन्द्रियान्तःकरणचतुष्टयरूपैकोनविंशतिर्मुखानि द्वाराणि यस्य । उक्तद्वारैः स्थूलविषयभोक्ता । विश्वश्चासौ नरो विश्वानरः स एव वैश्वानरो विश्व इत्यर्थः ॥३॥

**स्वप्नस्थानोऽन्तः प्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः प्रविविक्तभुक्तैजसो द्वितीयः पादः ॥ ४ ॥**

जाग्रद्वासनाजोऽवस्थाविशेषः स्वप्नः ।

अन्तरन्तःकरणस्थवासनामयसूक्ष्मविषयेप्रविविक्तः सूक्ष्मविषयः तेजोन्तःकरणं यस्य स तैजसोन्तः करणलीलः ॥ ४ ॥

**यत्र सुप्तो न कंचनकामं कामयते न कंचन स्वप्नं पश्यति तत्सुषुप्तम् । सुषुप्तस्थानएकीभूतः प्रज्ञानघनएवानन्दमयो ह्यानन्दभुक्चेतोमुखः प्राज्ञस्तृतीयः पादः ॥ ५ ॥**

यत्र काले कामं पदार्थं नेच्छति सुप्तस्तद्गाढनिद्रा सुषुप्तं स्थानं यस्य सः । द्वैतभानस्याऽज्ञानतमोग्रस्तत्वेनैकीभूत इवातोऽखिलज्ञानानां जाग्रत्स्वप्नजानां संघीभाव इव तदेति प्रज्ञानघनः । दुःखाभावादानन्दमय आनन्दरूपो हि यतस्तदात आनन्दभुगित्युच्यते निरायासो ऽदुःखीव लोके ।

अज्ञानावरणेप्यऽन्याऽऽवरणलयात् किञ्चित् स्वरूपानन्दस्फुरणं चेतो मुखमानन्दभोग-द्वारं यस्य सः एकत्रानन्दात्मनि तदाऽज्ञाना ऽऽनन्दाकारवृत्त्या भोक्तृत्वं मुखत्वं चोपचर्यत इति भावः। प्रकृष्टं विषयाऽपृक्तं स्वरूपं जानाति यस्तदा प्रज्ञस्सएव प्राज्ञः॥५॥

प्राज्ञस्तुतिमाहैष इति।

**एष सर्वेश्वर एष सर्वज्ञ एषोन्तर्याम्येषयोनिः सर्वस्यप्रभावाप्ययौ हि भूतानाम्॥६॥**

एष प्राज्ञो बुद्धशुद्धस्वरूपः सर्वस्येश्वरः न जीवभिन्नः कश्चनेश इति भावः। एवं च सर्वज्ञोऽन्तर्यामी सर्वान्तः प्रेरको योनिः कारणं च सर्वस्यैष हि यतो तो भूतानां प्रभवाप्ययावुत्पत्तिप्रलयावस्मादेवेति शेषः॥

अत्रोक्तार्थे वहिः प्रज्ञो विभुरित्याद्यानवगौड़पादीयकारिकाः॥ चतुर्थपादमाह नान्तः-प्रज्ञमिति—

नान्तः प्रज्ञं न वहिः प्रज्ञं नोभयतः प्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञम् अदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः ॥ ७ ॥

क्रमेण यो न स्वप्नावस्थो न जाग्रत् नैतत्सन्ध्यवस्थो न सुषुप्त्यवस्थो न सर्वज्ञो नाऽज्ञानरूपो ऽतो न ज्ञेयो ऽतो व्यवहारायोग्यो ऽतो न कर्मेन्द्रियग्राह्यो न लक्षणवाँल्लिङ्ग वा ननु मे यो तो ऽचिन्त्यो तो न शब्दवाच्यः किन्तु सदा य आत्मेत्याकार प्रत्ययस्तत्प्रमाणको जगद्राहितो तश्शान्तशिश-

वं मङ्गलमानन्दात्मा द्वैतशून्यस्तमकारणक-
प्रतीतपादत्रयात्मकाखिल प्रपञ्चोपलक्षिता-
धिष्ठानतया सिद्धं निर्विशेषचित्पदोपल-
क्षितं चतुर्थं पादत्रयापेक्षया कल्पितचतुर्थ-
त्वं मन्यन्ते स तुरीयपादः सर्वेषामात्मा
ज्ञेयश्चात्मत्वेन मुमुक्षुभिः ॥ ७ ॥

निवृत्तेरित्याद्या न वात्रकारिकाः ॥ चतुष्पा-
दात्मानादान्त्यरूपार्द्धमात्रया प्रणवश्चेत्यन-
योरभेदमाह सोयमिति—

**सोयमात्मा ऽध्यक्षरमोङ्का-
रोऽधिमात्रं पादामात्राः। मा-
त्राश्च पादा अकार उकारो
मकार इति ॥ ८ ॥**

स उक्त विधोऽयमात्मा अक्षरं वर्णमधि-
कृत्य वर्ण्यमान ओङ्कारः । आत्मपादाश्च
त्रयो मात्रा अधिकृत्य वर्ण्यमानामात्राः ।
मात्रात्मकास्तु पादा अउमं इति ॥ ८ ॥

विभजति जागरितेत्यादिना—

जागरितस्थानो वैश्वानरो ऽकारः प्रथमा मात्रा ऽऽप्तेरादिमत्त्वाद्वा । आप्नोति ह वै सर्वान्कामानादिश्च भवति य एवं वेद ॥ ९ ॥

श्रुतावादिरादिः प्राथम्यम् । देवलिप्यामुक्तौ च सर्वत्राऽकारो व्याप्तः प्रथम श्च वर्णानामिति प्रसिद्धं यथा तथा जाग्रदवस्था ऽऽद्या सर्वव्यापी विश्व इति च तस्माद्विश्वानरः प्रणवस्याऽकाराख्यप्रथममात्रा । य एवं विश्वा ऽकारा ऽभेदं जानाति स ह स्फुटं वै निश्चयेनेष्टं लभते महत्स्वग्रगण्यश्च भवति ॥ ९ ॥

स्वप्नस्थानस्तैजस उकारो

द्वितीया मात्रोत्कर्षादुभयत्वा द्वा उत्कर्षति ह वैज्ञान सन्तर्तिं समानश्च भवति नास्याब्रह्मवित्कुले भवति य एवं वेद ॥ १० ॥

पूर्वापेक्षयोत्तरत्वरूपोत्कर्षस्य पूर्वोत्तरोभयापेक्षयोभयस्पृग्मध्यस्थत्वरूपोभयत्वस्य च द्वितीययोः स्वप्नोकारयोस्तुल्यत्वात्तैजसः प्रणवस्योकाराख्यद्वितीयामात्रा । द्वितीय पाद मात्रा ऽभेद विदुपदेशेन ज्ञान सन्तानं वर्द्धयति समानो मध्यस्थश्च सर्वत्र भवत्यस्य वंश्याश्च ब्रह्मज्ञा भवन्ति ॥ १० ॥

सुषुप्तस्थानः प्राज्ञो मकारस्तृतीयामात्रामितेरपीतेर्वा । मिनोति ह वा इदं सर्वमपी-

तिश्च भवति य एवं वेद ॥११॥

मितिर्विक्षेप उत्पत्तिरपितीर्लयश्च जाग्रत्स्वप्नयोस्सुषुप्तितो यथा तथा ऽकारोकारयोर्मकारोच्चारणसमये पुनः प्रणवोच्चारणसमये च लयोत्पत्ती प्रतीयेते ततः प्राज्ञः प्रणवस्य मकाराख्यतृतीयामात्रा । तृतीया ऽभेदविदिदं जगत्स्वस्मिन्नेव विक्षिपति पुनस्तल्लयाधिष्ठानं च भवति । नेदमुपासनत्रयं किन्तु प्रणवब्रह्मध्यानैकोपासनस्तुत्यर्थमिदं विभागेन फलकथनामिति बोध्यम् ॥ ११ ॥

विश्वस्येद्याः पञ्चात्रकारिकाः ॥ नादान्त्यरूपार्द्धमात्राकाले ऽवयविनः प्रणवस्य निष्पत्त्या ऽवयवभेदा ऽप्रतीतेश्चार्द्धमात्रात्मको ऽमात्रः प्रणवस्तद्रूपश्चाऽद्वैतत्वादिनोक्तस्तुरीयपाद इति सफलमाह अमात्र इति—

अमात्रश्चतुर्थो ऽव्यवहार्यः

प्रपञ्चोपशमः शिवोऽद्वैत एवमोङ्कार आत्मैव संविशत्यात्मनात्मानं य एवं वेद ॥ १२॥

एवमुक्तप्रकारेण जगदात्मा प्रवण आत्मेत्युपास्यमात्माधिष्ठानकतया प्रणवोनात्मातिरिक्तः कश्चिदित्यात्मैव केवल इति विज्ञेयं वा । य एवं सकलमद्वैतञ्चितं जानाति स रज्ज्वां सर्प इव संविशति कल्पितात्मनाचिदात्मभावं प्रयातीति भावः॥१२॥

ओङ्कारमित्याद्याः षडत्रकारिकाः ॥

दययाऽनन्तरामस्य मृदुर्ग्रन्थोयमुम्भितः ।
श्रीस्वामिभास्करानन्दैः काश्यां माण्डूक्यवेदके॥१॥
कृशामर्द्धीः क भाष्येण क वेदान्ताब्धिमन्थनम् ।
तथाप्यघटितं किंवा गुरुदेवदयालवे ॥ २ ॥

इत्युपनिषत्प्रसादे माण्डूक्योपनिषत् ॥०॥

॥ श्रीगणेशाय नमः ॥

वच्मि किञ्चिच्चितं चित्वा माण्डूक्यविषयाः प्रति। भाष्यानुसरणप्राप्ता गौड़पादीयकारिकाः ॥ १ ॥

अथ गौड़पादाचार्यो माण्डूक्योपनिषदमवलम्ब्य मुमुक्षुजनोपकाराया ऽऽगमप्रधानोपायानिरूपणेनाखिलद्वैतावस्तुत्वप्रतिपादनेन तत्सिद्धा ऽद्वैतसमर्थनेन तद्विरुद्धा ऽवैदिकविवादाग्निमुखाल्मुकालातप्रशमनिरूपणेन चाऽऽगम वैतथ्या द्वैतालातशान्तिसभाख्यप्रकरणचतुष्टयंप्रणिनाय।

तत्र तावन्माण्डूक्यादावात्मनः स्थानवुद्ध्यऽवस्थादिभेदेन विश्वादिसंज्ञाभेदमुक्तं तथाप्यनुभूयन्ते ऽवस्थादयो भिन्नामयेति प्रतीतेस्सर्वातिरिक्तः साक्ष्येक एव चिदात्मेत्याह वहिः

प्रज्ञ इति—

वहिः प्रज्ञो विभुर्विश्वो ह्यन्तः प्रज्ञस्तु तैजसः। घनप्र-

**ज्ञस्तथाप्राज्ञ एक एव त्रिधा स्मृतः ॥ १ ॥**

एक एवात्मा जागरिते बहिः स्थूलदेहादौ प्रज्ञानवान् हि यतोऽतो विभुर्व्यापको विश्वस्तथा स्वप्ने तेजस्यन्तःकरणे प्रज्ञानवानिति तैजसः सुषुप्तौ त्वज्ञानतमोऽभिभूतत्वात्सर्वस्य सघनी भूताखिल ज्ञानवानिवातः प्राज्ञ इति त्रिधा स्मृतः। संज्ञास्थानान्यदीयावस्थादिना न कश्चिल्लोकेभिद्यत इति निर्विशेष आत्मेति भावः ॥ २ ॥

एकत्र बुद्ध्यवस्थायांत्रिधात्वेपी यथात्मन एकत्वं निर्विवादं तथोक्तत्रिधात्वेपीत्याशयेनाह दक्षिणेति–

**दक्षिणाक्षिमुखे विश्वोमनस्यन्तस्तु तैजसः। आकाशे च हृदि प्राज्ञस्त्रिधा देहे व्यवस्थितः ॥ २ ॥**

वामाच्छक्तेराधिक्याद्दक्षिणनिर्देशः। द्रष्टृत्वे विश्वत्वस्य विशेषतः प्रतीतेर्बाह्यकरणोपलक्षणतयाक्षि निर्देशः। मुखं चेन्द्रियाणां स्वस्वविशेषसामर्थ्यवद्भागः। दक्षिणनेत्रताराग्रे द्रष्टा विश्वः स एव निरुद्धकरणो दृष्टाद्यर्थान्वासनामयान्मनस्यन्तरेवस्मरँस्तैजसः मनोव्यापारं च विहाय हृदयाकाशे प्राणमात्रव्यापारः स एव प्राज्ञ इति त्रिधा व्यवस्थां प्राप्नोति स्थूलदेहेभिमान्यात्मा ॥ २ ॥

भोग्यत्रैविध्यमाह विश्व इति—

**विश्वो हि स्थूलभुङ् नित्यं तैजसः प्रविविक्तभुक्। आनन्दभुक्तथा प्राज्ञस्त्रिधा भोगं निबोधत ॥ ३ ॥**

पदार्थैः सुखं दुःखं वा भोगः। पदार्थाश्च

भौतिकामनोमया वा। प्रविविक्तं मनोमयं सूक्ष्मम्। आनन्दिनावपि विश्वतैजसौ तथापि बहुवाह्यऽऽन्तर व्यापारितया दुःखमयावेवेति प्राज्ञ एवानन्दभुग् जागरितेपि॥

भोग्यभेदाद्भोक्तृणां तृप्तेस्त्रैविध्यमाह स्थूलमिति—

स्थूलं तर्पयते विश्वं प्रविविक्तं तु तैजसम्। आनन्दश्च तथा प्राज्ञं त्रिधा तृप्तिं निबोधत॥ ४॥

स्थूलभोग्यपदार्थः स्थूलाभिमानि विश्वं तृप्तंकरोतीत्याद्यर्थः॥ ४॥

भोक्तृणां भोग्यानां चैकत्वज्ञानस्या मुख्य फल माह त्रिष्विति—

त्रिषु धामसु यद्भोग्यं भोक्तायश्च प्रकीर्तितः। वेदैत-

**दुभयं यस्तु सभुञ्जानो न लिप्यते ॥ ५ ॥**

धामसु जाग्रदादिषु स एवाहमिति प्रतीतेर्विश्वादिभोक्तॄणामेकत्वं भोग्यत्वेन स्थूलादिभोग्यानामेकत्वम् । उभयमेतदेकत्वं यो जानाति स भोगयुक्तोपि न रागद्वेषादिना स्वभावाच्च्युतो भवति ॥ ५ ॥

षष्ठमन्त्रे जगद्योनित्वेनस्तुतः प्राज्ञस्तत्र प्रागुत्पत्तेः कार्यसत्तामौपाधिकं कारणभेदं चाह

प्रभव इति—

**प्रभवः सर्वभावानां सतामिति विनिश्चयः। सर्वं जनयति प्राणश्चेतोंशून्पुरुषः पृथक् ॥ ६ ॥**

पूर्वतो रज्ज्वात्मना सन्नेवाहिरज्ञानेनोत्पद्यते तथा सतामेव सर्वकार्याणामु-

त्पत्तिरिति निश्चयः अतएव वन्ध्यासुतो न जायत इति भावः । अथ यद्यपि सकलाधिष्ठानोपादानं चिदेव तथाप्यऽनाद्यध्यस्तमायोपाधिप्रधानं चिद्ब्रह्म प्राणस्सर्वमचिद्वस्तु जनयति । चिद्रूपा अंशवः किरणा इव ये चिदाभासा इति यावत् तान्पुरुषो विम्बब्रह्मचिज्जनयतीति विवेकः ॥६॥

अयं च चिदचिद्विभागो ऽज्ञदृष्ट्या न विवेकिदृष्ट्येत्याह विभूतिमिति—

**विभूतिं प्रसवं त्वन्ये मन्यन्ते सृष्टिचिन्तकाः । स्वप्नमायासरूपेति सृष्टिरन्यैर्विकल्पिता ॥ ७ ॥**

अन्ये केचित्सृष्टिगताचित्ताः प्रसवमुत्पन्नमिमं जगत्पदार्थं त्वीश्वरस्य विभूतिमैश्वर्यं मन्यन्ते कैश्चित्तुसृष्टिरियंस्वप्नसदृशीति विकल्पं नीता कैश्चित्तु नटमायातुल्येति ॥७॥

इच्छामात्रं प्रभोः सृष्टिरिति सृष्टौ विनिश्चिताः। कालात्प्रसूतिं भूतानां मन्यन्ते कालचिन्तकाः ॥ ८ ॥

सत्यसंकल्पस्य प्रभोरिच्छैव सृष्टिरिति केचित्सृष्टिचिन्तकाः कालात्सृष्टिरिति ज्योतिर्विदः ॥ ८ ॥

अथ पूर्वार्द्धेन सृष्टिफले मतभेदमुत्तरार्द्धेनोक्ताखिलमतदूषणं च स्वसिद्धान्तेनाह भोगार्थमिति—

भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे। देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा ॥ ९ ॥

आप्तकामस्याखण्डचिदानन्दरूपस्य का

वाञ्छा न कापि सम्भवतीत्यर्थः अयं भावः क्रीडाभोगसृष्टिस्वविभूतिख्यापनविषयकेच्छा ऽभावेक्रीडादिचतुष्टयासिद्धिः भानेऽभानेन जगति भानेन जागतत्वेन कालस्य जगद्धेतुत्वासिद्धिः स्वाप्नमायिकपदार्थसृष्टेरप्रसिद्ध्या जगत्सृष्टौ तत्सादृश्योक्तेरसिद्धिरिति तस्मादयं भासमानः प्रपञ्चो देवस्य परमात्मन एष स्वभावो माया। तथाचेच्छादि सर्वं बोधात्मनि भातं मायिकं माया तु मायैव न किञ्चिदिति निष्कर्षः॥९॥

मायिकपादत्रयं माण्डूक्यषड्मन्त्रोक्तमित्युक्त्वा सप्तममन्त्रोक्तचतुर्थपादममायमित्याह निवृत्तेरित्यादिना—

**निवृत्तेः सर्वदुःखानामीशानः प्रभुरव्ययः। अद्वैतः सर्वभावानां देवस्तुर्यो विभुः स्मृतः॥ १०॥**

तुर्यौ विश्वाद्यपेक्षया तुरीयोदेवश्चिदात्मा ज्ञातस्सन्सर्वदुःखानामध्यात्मादीनां जगदात्मविश्वादीनां निवृत्तेरीशानः प्रभुरित्यर्थः । निवृत्तौ हेतुरधिष्ठानत्वादिति यावत् । अव्यय एकरसः । सर्वभावानां विश्वादिपादानामद्वैतः एकमधिष्ठानम् । विभुर्व्यापकः स्मृतस्तज्ज्ञैः ॥ १० ॥

**कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ । प्राज्ञः कारणबद्धस्तु द्वौ तौ तुर्ये न सिध्यतः ॥ ११ ॥**

प्राज्ञो ऽधिष्ठानाज्ञानमात्रोपाधिकः विश्वतैजसौ त्वऽज्ञानतत्कार्यस्थूलसूक्ष्मप्रपञ्चोभयोपाधिकौ । तुर्ये तूक्तविधे तावऽज्ञानतत्कार्योपाधीनसंभवतः मरीचिकोदकेन भूरिव न कदापि सोपाधिविश्वादिभिः स्पृश्यते तुरीय इति भावः ॥ ११ ॥

कार्यकारणाभ्यां विश्वतैजसयोर्बद्धत्वमति-
स्फुटमित्युपलक्षणतया प्राज्ञस्य बन्धस्तुरी-
ये तदसम्बन्धश्चानुभवाननुभवासिद्ध इ-
त्याह नेति—

नात्मानं न पराँश्चैव न सत्यं नापि चानृतम्। प्राज्ञः किंचन संवेत्ति तुर्यं तत्सर्वदृक् सदा ॥ १२ ॥

सुषुप्तोऽहं न किञ्चिदवेदिषमित्यनुस्मृतिसिद्धानुभवात्प्राज्ञः कारणीभूताज्ञानवान्। तुर्यन्तु तेषां प्राज्ञादीनामज्ञानादीनां च सर्वेषां द्रष्टृसाक्षिरूपं सदा सर्वावस्थासु न च तत्राज्ञानमनुभूयते अथवा तुर्यं तेषां सर्वेषां यादृक् बोधस्तद्रूपं सदा न च तत्र सूर्ये इव तमोरूपमज्ञानं संभवतीत्यर्थः ॥ १२ ॥

अतएव किञ्चित्साम्येनापि न तुरीये बन्ध-

शङ्कत्याह द्वैतस्येति—

द्वैतस्याग्रहणं तुल्यमुभयोः प्राज्ञतुर्ययोः। वीजनिद्रा युतः प्राज्ञः सा च तुर्येन विद्यते ॥ १३ ॥

द्वैताप्रतीतितौल्येऽपि शुद्धस्वचिद्रूपाज्ञाननिद्रायुतः प्राज्ञस्तुर्यं तु स्वयंप्रकाशचिद्रूपमिति विशेषः। वीजत्वोक्तिः पुनर्जाग्रदादिद्वैतप्रतीतिहेतुत्वान्निद्रायाः ॥१३॥

उक्तमेव स्फुटमाह स्वप्नेति—

स्वप्ननिद्रायुतावाद्यौ प्राज्ञस्त्वस्वप्ननिद्रया। न निद्रां नैव च स्वप्नं तुर्ये पश्यन्ति निश्चिताः ॥ १४ ॥

अन्यस्मिन्नन्यावबोधः स्वप्नः सद्रस्त्व-

नवबोधो निद्रा ताभ्यामात्मन्यनात्मदेहादिप्रपञ्चनिश्चयित्वेन सदात्मा निश्चयित्वेन चोभौ विश्वतैजसौ युतौ प्राज्ञस्तु निद्रयैव। तुर्ये चिदात्मनि न पश्यन्त्युभयं चिदात्मज्ञा असम्भवादिति भावः ॥ १४ ॥

स्वप्ननिद्रयोर्लक्षणसमयौ तुर्यबोधसमयं चाहान्यथेति—

**अन्यथा गृह्णतः स्वप्नो निद्रातत्वमजानतः। विपर्यासे तयोः क्षीणे तुरीयं पदमश्नुते ॥ १५ ॥**

शून्ये ह्यद्यऽन्यथा हस्त्यादि बुध्यते तदा पुंसः स्वप्नो यदा चन किञ्चिद्वस्तु बुध्यते तदा सुषुप्तिनिद्रेति पूर्वार्द्धार्थः प्रकृते तु तयोः विश्वतैजसाख्यकार्यस्यदेहाद्यन्यथाग्रहणचित्तत्वाऽग्रहणरूपेविपर्यासे वैपरीत्ये प्राज्ञाख्यकारणस्य चित्तत्वाऽग्रहणात्मक के-

वलनिद्ररूपे विपर्यासे नष्टे तुर्यपदं लभते १५

विपर्यासनाशतुर्यपदलाभयोर्हेतुर्बोध इत्याहानादीति—

अनादिमायया सुप्तो यदा जीवः प्रबुध्यते। अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा १६

सुप्तो मिथ्यार्थबोधात्मा ऽनवबोधयुतः प्रबुध्यते स्वयं वा केनचित्तत्त्वमसीत्यादिना मायाऽमायविवेकं लभते तदा मायिकेषु सन्निश्चयं विपर्यासं त्यक्त्वाऽन्यथाग्रहणतत्त्वाऽग्रहणरूपस्वप्ननिद्रारहितमतोऽजमद्वैतमजमात्मस्वरूपं तुरीयं निश्चिनोति ॥१६॥

मायिकेषु सत्यत्वाऽभावनमेव विपर्यासनाशः शिष्टसति सन्निश्चय एव तुर्यपदलाभ इति स्पष्टयति प्रपञ्चइति—

प्रपञ्चो यदि विद्येत निवर्ते-

त न संशयः । मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ॥ १७ ॥

द्वैतं स्यात्तर्हि तन्नाशोपि स्याद्या माया सा तु मानारस्त्येवेति बोधमात्रे लब्धृलभ्यभावोपि नेति भावः ॥ १७ ॥

यथा सर्वं द्वैतं तथा गुरुशिष्यशास्त्रद्वैतमपि मिथ्यैव मायिककल्पितत्वादद्वैतमेव तु सन्मायाविवदित्याह विकल्प इति—

विकल्पो विनिवर्तेत कल्पितो यदि केनचित् । उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते ॥ १८ ॥

कल्पितपुरुष कल्पितगृहादिवद्गुर्वादि विकल्पोपि कल्पितश्चेन्निवर्तिष्यत्येव । कंदेत्यपेक्षायामाह । स्वप्नसूचितपदार्थोपलब्धिवदुपदेशादधिष्ठानचिदात्मनि ज्ञाते स-

त्ययं गुरुशिष्यसम्बादोपि निवर्तिष्यतीति सिद्धं द्वैतं नास्तीति ॥ १८ ॥

अथाष्टमादि माण्डूक्यचतुर्मन्त्रोक्तमात्मप्रणवाऽभेदं तत्पादमात्राऽभेदं च सफलं पञ्चभिराह विश्वस्येत्यादिभिः—

विश्वस्याऽत्व विवक्षायामादिसामान्यमुत्कटम्। मात्रा संप्रतिपत्तौस्यादाप्तिसामान्यमेवच ॥ १९ ॥

अत्वविवक्षायां नामा ऽकारमात्रा संप्रतिपत्तौ विश्वाऽकारयोरभेदारोपे इत्यर्थः आदित्वं व्याप्तिश्चेतिद्वयं द्वयोस्समानमित्येतत्सामान्यमेवोत्कटमभिव्यक्तं कारणम् समता च विश्वाऽकारादीनां मन्त्रार्थे स्फुटमुक्तेति तत एवावसेया। एवमग्रिमकारिकयोरप्यर्थः ॥ १९ ॥

तैजसस्योत्वविज्ञान उत्कर्षों दृश्यते स्फुटम् । मात्रा संप्रतिपत्तौस्यादुभयत्वं तथाविधम् ॥ २० ॥

तैजसो कारयोरभेदे उत्कर्ष उत्तरत्वमुभयत्वं च साम्यं स्फुटं दृश्यते ॥ २१ ॥

मकारभावे प्राज्ञस्य मानसामान्यमुत्कटम् । मात्रा संप्रतिपत्तौ तु लयसामान्यमेव च ॥ २१ ॥

प्राज्ञस्य मकारत्वे नाम मकारमात्राभावनायां मानमुत्पत्तिर्लयश्च साम्यं निमित्तं स्फुटम् ॥ २१ ॥

पादमात्राऽभेद निश्चयफलमाह त्रिष्विति–

त्रिषु धामसु यत्तुल्यं सामा-

न्यं वेत्ति निश्चितः। स पूज्यः सर्वभूतानां वन्द्यश्चैव महामुनिः ॥ २२ ॥

जाग्रदाद्यवस्थासूक्तं पादमात्राणां साम्यं यो जानाति तत्र दृढविश्वासश्च स लोके पूजनीयो बन्दनीयो महामुनिर्ब्रह्मविच्च भवति ॥ २२ ॥

सामान्येन पादमात्राऽभेदं ज्ञात्वा मात्राप्राधान्येन प्रणवस्य ध्यातुः फलं दर्शयत्यकार इति—

अकारो नयते विश्वमुकारश्चापि तैजसम्। मकारश्च पुनः प्राज्ञं नामात्रे विद्यते गतिः ॥ २३ ॥

प्रणवध्याने प्राधान्येन विषयीभूतो ऽका-

हिर्हेतौ निश्चये वा। अपरं ब्रह्म हिर
ण्यगर्भः परं परब्रह्म अपूर्वो कारणो ऽनप
रो कार्यो तो ऽवाह्यो ऽन्यार्थहीनो तो ऽन
न्तरो भेदशून्यो तो ऽव्ययः प्रणवः ॥२६

**सर्वस्य प्रणवोह्यादिर्मध्य मन्तस्तथैव च। एवं हि प्रणवं ज्ञात्वा व्यश्नुते तदनन्तरम् ॥ २७ ॥**

नटवदखिलमायिकप्रपञ्चस्याद्यन्तमध्यं प्रणवः प्रपञ्चो न किञ्चिद्वस्त्विति भावः हि निश्चितमिदं यतो वाऽतः एवंह्येव मेवोक्तप्रकारकं प्रणवं ज्ञात्वा ऽनन्तरं ज्ञानोत्तरक्षणे तदुक्तं प्रणवस्वरूपं ब्रह्म भवति ॥ २७ ॥

प्रणवब्रह्मेति ध्यातुस्सदा सन्निहित एव फलदः प्रणव इति सूचयन्नुक्तमेव प्रकारान्त

रेणवैशद्यायाह प्रणवमिति—

प्रणवं हीश्वरं विद्यात् सर्वस्य हृदि संस्थितम्। सर्वव्यापिनमोङ्कारं मत्वा धीरो न शोचति॥ २८॥

प्रणवः सर्वहृत्स्थेश्वर एवं चिदात्मत्वेन व्यापि प्रणवभावनानिश्चयाज्जगद्बन्धनशोको न॥ २८

प्रणवब्रह्मज्ञं स्तौत्यमात्र इति—

अमात्रोऽनन्तमात्रश्च द्वैतस्योपशमः शिवः। ओङ्कारो विदितो येन स मुनिर्नेतरो जनः॥ २९॥

मात्राविभागशून्यस्तुरीयो संख्यपदार्थऽस्वरूपस्तदुपशमस्वरूपश्चातस्सदा शिवः

द्यापि वैतथ्यं न्यायपूर्वकं युक्तिसिद्धं तथाप्युक्तयुक्तिहेतुना प्राप्तं वै सिद्धमेव स्वप्ने मिथ्यात्वं श्रुत्यापि प्रकाशितमुक्तमित्याहुः युक्तिसिद्धोप्यर्थो ऽपौरुषेयश्रुत्यानूदितीति दृढ इति भावः ॥ ३ ॥

प्रसाधितं स्वाप्नवैतथ्यं दृष्टान्तयत्यन्तरिति–

**अन्तः स्थानात्तु भेदानां तस्माज्जागरिते स्मृतम्। यथा तत्र तथा स्वप्ने संवृतत्वेन भिद्यते ॥ ४ ॥**

तस्मात्स्वप्नदृष्टस्य मिथ्यात्वसिद्धेर्हेतोर्यथा तत्र स्वप्ने तथा जागरितेपि भेदानां देहादिपदार्थानां मनोमयत्वेनाऽन्तः स्थानादेव हेतुना वैतथ्यं स्मृतम् न चैतावता जाग्रत्स्वप्ना ऽभेदः स्वप्नेहि संकुचितपदार्थदेशत्वेन भेदोस्ति जाग्रद्दशास्तु तत्तत्पदार्थोचितवैतत्येन कल्पिता इति भावः ४

वस्तुतस्तु जाग्रत्स्वप्नयोरभेद एवेत्याह स्वप्नेति-

**स्वप्नजागरितस्थाने ह्येकमाहुर्मनीषिणः। भेदानां हि समत्वेन प्रसिद्धेनैव हेतुना ५**

प्रसिद्धं मिथ्यात्वं जाग्रत्स्वप्नपदार्थानामिति समत्वाज्जाग्रत्स्वप्नावेकमाहुः ॥ ५ ॥

जाग्रत्पदार्थानां मिथ्यात्वे हेत्वन्तरं सूचयत्यादाविति—

**आदावन्ते च यन्नास्ति वर्तमानेपि तत्तथा। वितथैः सदृशाः सन्तोऽवितथा इव लक्षिताः ॥ ६ ॥**

यद्रज्जुसर्पादि पूर्वं पश्चाच्च न भवति तत्प्रतीतिकालेपि तथा नास्त्येव । ईदृशा एव तु जाग्रत्पदार्था अपि। परन्तु सत्याइव

सा कल्पितन्त्वसत् । वहिश्चेतो गृहीतं स दृष्टं वैतथ्यमेतयोः ॥ ९ ॥

अन्तर्मनस्येव कल्पितं मनोरथादि मिथ्या वहिश्चक्षुरादि द्वारा चेतसा गृहीतं घटादि सदिति स्वप्नवृत्तौ स्वप्नस्थानेपि तुल्यं तथाप्येतयोः सदसत्त्वाभ्यां व्यवहृतयोरुभयोरपि मिथ्यात्वं दृष्टं जाग्रति बाधात् ९

दार्ष्टान्तिकमाह जाग्रदिति—

जाग्रद्वृत्तावपि त्वन्तश्चेतसा कल्पितन्त्वसन् । बहिश्चेतो गृहीतं सद्युक्तं वैतथ्यमेतयोः ॥ १० ॥

स्वप्नेइव जाग्रत्स्थानेपि सत्या सत्यत्वाभ्य व्यवहृतयोर्मनोमयत्वाऽविशेषात्परमार्थ स-

-च्चिति मनोलयेबाधदर्शनाच्च वैतथ्यं यु-
क्तमुचितमेवेत्यर्थः ॥ १० ॥

शङ्कते उभयोरिति—

**उभयोरपि वैतथ्यं भेदानां स्थानयोर्यदि । क एतान्बुध्यते भेदान् को वै तेषां विकल्पकः ॥ ११ ॥**

जाग्रत्स्वप्नोभयस्थसर्वार्थानां मिथ्यात्वं यदि तर्हि कः पूर्वसिद्धः स्थानान्तरे मिथ्यार्थान्बुध्यते स्मरति तत्कालं वा बुद्ध्वा बिकल्पको रचयति न कोपीतीष्टापत्तौ तु शून्यात्मवादो वदतो व्याघातादयुक्तः स्यादिति भावः ॥ ११ ॥

समाधत्ते कल्पयतीति—

**कल्पयत्यात्मनात्मानमात्मादेवः स्वमायया । स एव**

बुध्यते भेदानिति वेदान्तनि-
श्चयः ॥ १२ ॥

देव आत्माचिदात्मा यः स एव स्वपरकल्पनसमर्थया ऽनादि चिदधिष्ठानकया स्वस्यमायया स्वभावेनात एवात्मनाऽऽत्मस्वरूपेणद्वारा ऽऽत्मानमेवोपादानं निखिलभेदान्करोतिस्मरतिच स्वप्ने इवात्मैव कर्तृकार्यकरणतत्स्मरणतदभावादीति भावः॥१२॥

कल्पनाप्रकारमाह विकरोतीति—

विकरोत्यपरान्भावानन्त-
श्चित्ते व्यवस्थितान् । नियताँश्च वहिश्चित्त एवं कल्प-
यते प्रभुः ॥ १३ ॥

अन्तश्चित्ते मायाख्यचित्तमध्ये पूर्वं व्यवस्थितान्कुलालचित्त इव नामरूपाभ्यामभिव्यक्तानपराञ्जगत्पदार्थान्पुनः करदण्डादि

व्यापारेण बाह्यघटादीनिव तादृक् संकल्प रूपमायाव्यापारेण नियतान्नियतकालस्थितिकान्विकरोत्युपादयति वहिश्चित्तो ऽनात्म चित्त ईश एवं करोति चादनियतान्स्वप्नपदार्थादीनप्येवं संकल्पमात्रेणैव करोतीत्यर्थः ॥ १३ ॥

तस्मात्संकल्पभेदेन भिन्ना इवापि स्वाप्ना इवैव न जाग्रत्स्वप्नपदार्थयोर्विशेष इत्याह चित्तकाला इति—

चित्तकाला हि येऽन्तस्तु द्वय कालाश्च ये वहिः । कल्पिता एव ते सर्वे विशेषोनान्यहेतुकः ॥ १४ ॥

अन्तर्हृदि संकल्पकालमात्रस्थितिकाये तथा वहिर्जगति यावद्द्वैतकालस्थायिनो ये ते सर्वे कल्पितत्वेनाविशेषाः नान्यहेतुना तेषु विशेषः कश्चनेत्यर्थः ॥ १४ ॥

इन्द्रियनिबन्धनो हि स्फुटत्वाऽस्फुटत्वविशेष इति नायं सत्यमिथ्यात्वहेतुरित्याहाऽव्यक्ता इति—

अव्यक्ता एव येन्तस्तु स्फुटा एव च ये वाहिः । कल्पिता एव ते सर्वे विशेषस्त्वन्द्रियान्तरे ॥ १५ ॥

अन्तरन्तःकरणे ये स्वाप्नादयः । वहिश्चक्षुरादि देशे घटादयश्च ये तेषु कल्पितत्वं तुल्यम् । वस्तुतस्तु व्यक्ताऽव्यक्तत्वविशेषो मिथ्याभूते स्वप्नपदार्थादावपीत्यकिञ्चित्करो विशेष इति भावः ॥ १५ ॥

अस्तु कल्पितत्वात् सर्वं मिथ्याकल्पनैव तु तावत् कथमित्यत आह जीवमिति—

जीवं कल्पयते पूर्वं ततो भावान्पृथग्विधान् । वाह्या ना-

ध्यात्मिकांश्चैव यथाविद्यस्तथा स्मृतिः ॥ १६ ॥

स्वशक्त्याचिदात्मापूर्वं प्रथमं जीवं कल्पयते ऽहमित्याकारेण भाति ततो यादृशी विद्या ज्ञानं यस्य तथा तादृशी स्मृतिर्यस्येदृशो जीवरूपस्सन्बाह्याञ्च्छरीरादीनाध्यात्मिकानिन्द्रियादींश्च भावान्कल्पयते। पूर्वं पूर्वंकल्पितपदार्थस्मृत्योत्तरोत्तरपदार्थसंकल्पना तत्तत्पदार्थसंकल्पनया संस्कारेण च तत्तत्स्मृतिः जगच्चानवस्थितमेवेति नानवस्थेति भावः ॥ १६ ॥

प्रथमजीवकल्पनानिमित्तं किमत आहानिश्चितेति

अनिश्चिता यथा रज्जुरन्धकारे विकल्पिता। सर्पधारादिभिर्भावैस्तद्वदात्मा विकल्पितः ॥ १७ ॥

यथान्धकारहेतोरज्ञातारज्जुस्सर्पस्रग्दण्ड-जलधाराभावैः कल्प्यते तथा शुद्धाचिदा-नन्दात्माप्य ऽविद्यया ऽज्ञातो द्रष्टृदृश्य-भावेन । अधिष्ठानविशेषानिश्चयो निमित्त-मिति भावः ॥ १७ ॥

तस्मान्निश्चय एव तद्बाधको ऽद्वैतसाधकश्चेत्याह निश्चितायामिति—

निश्चितायां यथा रज्ज्वां विकल्पो विनिवर्तते । रज्जुरे-वेति चाद्वैतं तद्वदात्मविनि-श्चयः ॥ १८ ॥

अधिष्ठाननिश्चये ऽनिश्चय तत्कार्यविक-ल्पापाये निर्विकल्परूपाद्वैतत्वमित्यर्थः ॥

लोकेऽधिष्ठानातिरिक्तस्य कल्पकस्य प्रसिद्धेरा-शङ्क्य समाधत्ते प्राणेति—

प्राणादिभिरनन्तैश्च भावैरे-

तैर्विकल्पितः । मायैषा तस्य देवस्य यया संमोहितः स्वयम् ॥ १९ ॥

एकश्चिदात्मैव सन् स्वयमेतद्दृश्यमानप्राणाद्यनन्तपदार्थाकारेण द्रष्टृदृश्यत्वभ्रान्तभ्रमत्वादिविरुद्धद्वन्द्वरूपेण कथं कल्पित इति चेत् तस्य चिदात्मनो मायेयमघटितस्यापि घटयित्री यया स्वयमपि भ्रान्तः मायाकार्यस्वनिद्रया स्वस्यैव भ्रान्तत्वेन विरुद्धद्रष्टृदृश्यत्वादिना कल्पितत्वस्य स्वप्ने प्रसिद्धेर्मायायां किन्नु दुर्घटमितिन्यायाच्चनेदमसंभवग्रस्तमिति भावः ॥ १९ ॥

प्राणादीनेव कांश्चिद्दर्शयति प्राण इत्यादि नवपद्यैः—

प्राण इति प्राणविदो भूतानीति च तद्विदः । गुणा इति

गुणविदस्तत्वानीति च तद्विदः ॥ २० ॥

प्राणादयः सर्वे चानुक्ता अपि सर्वदा कालत्रये तत्तत्प्राणिभिः कल्पिताभावा इहत्वात्मन्येव कल्पिता इति नवश्लोकनिष्कृष्टार्थः। प्राणो हिरण्यगर्भ ईश्वरो वा जगद्धेतुरिति हिरण्यगर्भोपासकानैयायिकाश्च कल्पयन्ति। पृथ्व्यप्तेजोवायवो जगद्धेतव इति तद्विदो भूतविदो लोकायतिकाः गुणा अविभक्ताः प्रधानमिति यावत् गुणविदस्साङ्ख्याः। आत्मा ऽविद्या शिव इति तत्वानीति शैवाः ॥ २० ॥

पादा इति पादविदो विषया इति च तद्विदः। लोका इति लोकविदो देवा इति च तद्विदः ॥ २१ ॥

पादा विश्वतैजसप्राज्ञाः सर्वहेतव इति सोपाधिकात्मचित्ताः । विषय एव जगति सार इति वात्स्यायनादयः । भूरादिलोका एव सारभूता इति पौराणिकाः । देवा एव फलदा इति देवोपासकाः ॥ २१ ॥

**वेदा इति च वेदविदो यज्ञा इति च तद्विदः । भोक्तेति च भोक्तृविदो भोज्यमिति च तद्विदः ॥ २२ ॥**

वेदविदो वेदपाठरताः यज्ञविदो बौधायनादयः भोक्तारमात्मानं विदन्ति साङ्ख्याः तद्विदः पाचकाः वेदाद्येव तत्त्वत्वेते निरूपयन्ति ॥ २२ ॥

**सूक्ष्म इति सूक्ष्मविदः स्थूल इति च तद्विदः । मूर्तइति मूर्त-**

विदो ऽमूर्तइति च तद्विदः २३

सूक्ष्मश्चक्षुरादिरूपः स्थूलोदेहरूपोवात्मेति केचित् । मूर्तेशिवविष्णवादिरेव परमार्थ इत्यागमज्ञाः । अमूर्तःशून्यः परमार्थ इति केचित् ॥ २३ ॥

काल इति कालविदो दिश इति च तद्विदः । वादाइति वादविदो भुवनानीतितद्विदः२४

कालो दिशः परमार्था इति ज्योतिर्वित्स्वरोदयविदः । धातुवादमन्त्रवादादयो वादाश्चतुर्दशलोकाः सारभूता इति केचित्२४

मनइति मनोविदो बुद्धिरिति च तद्विदः । चित्तमिति चित्तविदो धर्माधर्मौ च तद्विदः २५

मनोबुद्धिश्चित्तं वात्मेति केचित् पुण्य-

पापे एव सारभूते इति मीमांसकाः ॥२५॥

पञ्चविंशक इत्येके षड्विंश इति चापरे । एकत्रिंशक इत्याहुरनन्त इति चापरे ॥२६॥

प्रधानम् १ महत् २ अहम् ३ तन्मात्राणि ८ इन्द्रियाणि १८ भूतानि २३ मनः २४ आत्मा २५ चेतिसाङ्ख्याः ईश्वरश्चे २६ ति पातञ्जलाः कालोऽविद्यानियतिः कालकलामायाचे ३१ ति पाशुपताः असङ्ख्याः पदार्था इति केचित् ॥ २६ ॥

लोकाँल्लोकविदः प्राहुराश्रमा इति तद्विदः । स्त्रीपुनपुंसकं लैङ्गाः परापरमथापरे २७

लोकाजनास्तदाराधनमिति यावत् । चत्वार आश्रमा इति दक्षादयः । लैङ्गा वैयाकारणाः परम परं च ब्रह्मेति केचित् ॥२७॥

सृष्टिरिति सृष्टिविदो लय इति च तद्विदः । स्थितिरिति स्थितिविदः सर्वे चेह तु सर्वदा ॥ २८ ॥

सृष्टिस्थितिलया इति पौराणिकाः । एवमिहात्मन्येव यथा संस्कारं सदा सर्वे कल्प्यन्ते । शुद्धबोधात्मा तु योग्याधिष्ठानाभावादकल्पित इति भावः ॥ २८ ॥

कल्पनाऽऽनन्त्यस्सामान्यत आह यमिति—

यं भावं दर्शयेद्यस्य तं भावं स तु पश्यति । तं चावति स भूत्वासौ तद्ग्रहः समुपैति तम् ॥ २९ ॥

प्रमाणीभूतः कश्चन यं पदार्थमिदमित्थमिति यस्योपदिशति स पुरुषस्तं पदार्थं

जानाति ततस्तत्र पदार्थे यो ग्रहआग्रह इद-मेव तत्वमिति स तं पुरुषं याति। तदाग्र-हेग च पुरुषोन्यपदार्थान्निवर्तत इति सोऽसौ पदार्थः कल्पितो भूत्वा तं कल्पितारमव-ति स्वस्मिन्नासक्त्या ऽन्यार्थे ऽप्रसक्तौ हेतु-र्भवति ॥ २९ ॥

ननन्वेवमात्मकार्यत्वात्प्राणादयोपि सत्या एव स्युरत आहैतैरिति—

**एतैरेषो ऽपृथग्भावैः पृथगेवेतिलक्षितः। एवं यो वेद तत्त्वेन कल्पयेत्सोऽविशङ्कितः ॥३०॥**

कल्पितत्वेनात्मनः पृथक्सत्ता शून्या एते तथाप्येतैः कल्पितप्राणादिभिरेष आत्मा पृथगेव लक्ष्यते ऽज्ञैः एवं तत्त्वेन याथातथ्येन यो विवेकी वेदसो संशयमखिलवेदतात्पर्यम् निर्विशेषात्मानि कल्पयेज् ज्ञातुं समर्थो भवेत् । यद्वोक्ताखिलकल्पने भेदनिश्च-

यिनं निन्दत्येतैरिति। तथा चायमर्थः एतैरात्मा पृथगेव लक्ष्यते बुध्यते जगदात्मानौ भिन्नाविति यावत् य एवं निश्चयेन जानाति स सदा कल्पयेदेव जगन्नमुच्येतकुतो यतो ऽपृथग्भावा एते प्राणादयः कल्पितानामधिष्ठानतः पृथगभावादिति ॥ ३० ॥

जगतःकल्पितत्वे वेदान्ताः प्रमाणमित्याह स्वप्नेति।

**स्वप्नमाया यथा दृष्टे गन्धर्वनगरं यथा। तथा विश्वमिदं दृष्टं वेदान्तेषु विचक्षणैः ॥ ३१ ॥**

विद्वद्भिरिदं विश्वं स्वाप्नादिवदसद्रूपं निर्णीतं नेह नानाऽस्तीत्यादि वेदान्तेषु। यद्वाऽनन्तरं निन्दायाः स्तुतिरियमभेदज्ञस्य स्वतः प्रामाण्यवन्निर्विशेषपरवेदान्तिन एव विचक्षणा इति ॥ ३१ ॥

निर्णीताऽखिलवैतथ्यमपवादरीत्यान्त आह नेति-

**न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः। न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥ ३२ ॥**

निरोधः प्रलयः साधको मुक्तेः। भेदमात्रमात्मनि कल्पितमधिष्ठानपर्यवसायी च तन्निषेध इति न किञ्चिदित्येव सत्यम् ॥ ३२ ॥

नन्वसत्वे द्वैतस्य द्वैतापेक्षमद्वयत्वमपि न सिध्येदित्याशङ्कामिष्टापत्या परिहरति भावैरिति—

**भावैरसद्भिरेवायमद्वयेन च कल्पितः। भावा अप्यद्वयेनैव तस्मादद्वयता शिवा ॥ ३३ ॥**

भावानामसत्त्वादद्वयत्वेनायमात्माकल्पितः। अद्वयहेतुना च भावाः कल्पिताः तस्मा-

दद्वयत्वादेरपि द्वैतान्तःपातित्वेन कल्पित-त्वादेववस्तुस्थितिः शिवाऽक्षता । न क-ल्पनाविनाधिष्ठानमिति भावः ॥ ३३ ॥

कल्पितत्वेन मृषात्वमेव भावानामनुभावयति विकल्पेन नेति—

नात्मभावेन नानेदं न स्वे-नापि कथंचन । न पृथङ् नापृथक्किंचिदिति तत्त्वविदो विदुः ॥ ३४ ॥

इदं जगदधिष्ठानात्मरूपेण न नाना । ए-कत्वादात्मन इति भावः । नापि स्वीये न कल्पितरूपेण कल्पितानामधिष्ठानातिरेके-णानुपलम्भात् अतएव कल्पितपदार्थानाम-न्योन्यं पृथक्त्वमपृथक्त्वं वानेत्यात्मविद्धाः ३४

कुतो नेयमन्येषां धीरत आह वीतेति—

वीतरागभयक्रोधैर्मुनिभिर्वे-

**द्पारगैः। निर्विकल्पो ह्ययं दृ-ष्टः प्रपञ्चोपशमो ऽद्वयः ॥३५॥**

अधीतवेदार्थमननेन रागादिरहितैरेव द्वैतोपशमवत्त्वेनाद्वयो निर्विकल्पो निर्विशेषोऽयमात्मा दृष्टो बुद्धो भवति ॥ ३५ ॥

न वेदान्ताध्ययनमात्रेणात्मा बुध्यत इति सूचयन्नात्मबोधोत्तरमपि हेयमेव रागादीति सूचयति तस्मादिति—

**तस्मादेवं विदित्वैनमद्वैते योजयेत्स्मृतिम्। अद्वैतं समनुप्राप्य जडवल्लोकमाचरेत्॥३६॥**

तस्मान्मननस्यावश्यकत्वादेवमद्वयत्वादिनैनमात्मानं शास्त्रतो ज्ञात्वाऽद्वैतात्मनि स्मृतिं पुनः पुनः स्थापयेत् एतन्निदिध्यासनेन रागादिनिवृत्त्याऽद्वैतं वस्तु साक्षात्कृत्य लोकं जनं प्रति जडवदाचरेन्न सत्कारराया-

त्ममहत्त्वं प्रख्यापयेद्रागादिरहित एव भवेदिति भावः ॥ ३६ ॥

कृतात्मसाक्षात्कारस्य वृत्तिमाह निःस्तुतिरिति—

**निःस्तुतिर्निर्नमस्कारो निःस्वधाकारएवच। चलाचलनिकेतश्च यतिर्यादृच्छिको भवेत् ॥ ३७ ॥**

निर्वासनत्वाद्देवादि स्तुत्याद्यखिलकर्महीनोभवेद्यतिः पूर्वं कृतात्मलाभयत्नः तथा शारीरकर्मार्थं चलं शरीरादि तन्निकेतस्तदाश्रयो भवेद्देहाद्यनुसन्धानवान्भवेत् शरीरार्थमपि न याचको भवेत्किन्तु यादृच्छिकः दैवलब्धेन निर्वर्तिताखिलजीवनादि व्यवहारः । अन्यदात्वचलंब्रह्मतान्निकेत एव भवेत् ॥ ३७ ॥

प्रकरणोक्तार्थफलमन्ते ग्राहयति तत्त्वमिति—

तत्त्वमाध्यात्मिकं दृष्ट्वा तत्त्वं दृष्ट्वा तु बाह्यतः । तत्त्वीभूतस्तदारामस्तत्त्वादप्रच्युतो भवेत् ॥ ३८ ॥

देहाद्याध्यात्मिकं बाह्यं च पञ्चभूतादि सर्वं रज्ज्वहीं रज्जुरेवेति वञ्चित्त्वत्त्वमेवेति ज्ञात्वा चिदेवाहं तर्हीति भावनादार्ढ्येन चिद्रूपः तदारामश्चिन्निष्ठ एव भवेन्न कदाचिदचित्किंचिद्भावयेत् ॥ ३८ ॥

इति वैतथ्यप्रकरणम् ॥

अथ द्वैतवैतथ्यसिद्धाऽद्वैते युक्तीर्दिदर्शयिषुरुपास्योपासकभेदं तावन्निरस्यत्युपासनेति—

उपासनाश्रितो धर्मो जाते ब्रह्मणि वर्तते । प्रागुत्पत्तेरजं सर्वं तेनासौ कृपणः स्मृतः १

उपासनामाश्रित उपास्यत्वोपासकत्वादि धर्मः हिरण्यगर्भादिगर्भप्रपञ्चात्मना ब्रह्मणि प्रादुर्भूते सति प्रवर्तते । यतः सृष्टेः पूर्वं सर्वमिदमेकमजंब्रह्मैव तेन कदाचित्कत्वेन कार्यत्वेनानित्यत्वेनासौ धर्मः कृपणो दुःखहेतुः । प्रसिद्धाचानेकविधेहदीनता स्वस्वामिभावे ॥ १ ॥

सनातनमजं वक्तुमाहात इति—

**अतो वक्ष्याम्यकार्पण्यमजाति समतां गतम् । यथा न जायते किञ्चिज्जायमानं समन्ततः ॥ २ ॥**

यतोल्पं यत्तद्दुःखमतः समता सदैकरसतातयाजन्म कार्पण्यरहितं ब्रह्मवस्त्वहं वक्ष्यामि । समन्ततः सर्वतो जगद्रूपेण जायमानमपि ब्रह्मकिंचिदपि न जायते वस्तुतो

यथा येन प्रकारेण तं प्रकारमपि वक्ष्यामी-
त्यर्थः ॥ २ ॥

प्रकारमेवाहात्मेति—

**आत्मा ह्याकाशवज्जीवैर्घटाकाशैरिवोदितः । घटादिवच्च संघातैर्जातावेतन्निदर्शनम् ॥ ३ ॥**

वस्तुतो न जायत एव यथाकाशं तथापि घटाद्याकाशरूपेणोत्पन्न इव तथात्मा ब्रह्मजीवरूपेणोदित उत्पन्न इव भाति यथा चातिसूक्ष्ममप्याकाशमेव वाय्वादिक्रमेण घटादि भवत्येवमात्मा भूतभौतिकसंघातरूपेण एतदेव निदर्शनं दृष्टान्तो जातौ जगत उत्पत्तौ बोध्यम् । विवर्ताभिप्रायेणेयं कार्यकारणभावोक्तिः शास्त्रे इति भावः ॥३॥

लयशास्त्रमपि प्रातीतिकलयविषयकमेवेत्याशयेनाह घटादिष्विति—

घटादिषु प्रलीनेषु घटाकाशादयो यथा। आकाशे संप्रलीयन्ते तद्वज्जीवा इहात्मनि ॥ ४ ॥

उत्पत्तिवल्लयोप्यौपाधिकत्वात्प्रातीतिक एव न वस्तुत इति भावः ॥ ४ ॥

न चैकस्य सर्वोपाधिगतत्वे एकदेहे सुखादौ जाते सर्वदेहसुखादिमानहमिति बोधप्रसङ्गः सुखादेरुपाधिगतत्वादुपाधीनां च परस्परं भेदादिति दृष्टान्तेनाह यथेति—

यथैकस्मिन्घटाकाशे रजोधूमादिभिर्युते। न सर्वे संप्रयुज्यन्ते तद्वज्जीवाः सुखादिभिः ॥ ५ ॥

एकस्मिन् घटैकत्वेनैकत्ववत्त्वेन प्रतीते।

युते युत इव प्रतीते । सर्वे यावदन्यघटभेदैर्भिन्ना इव प्रतीताः । न संप्रयुज्यन्ते न संयुक्ताः प्रतीयन्ते ॥ ५ ॥

नान्यभेदेनान्यो भिद्यते वस्तुत इति दृष्टान्तेनाह रूपेति—

**रूपकार्यसमाख्याश्च भिद्यन्ते तत्र तत्र वै । आकाशस्य न भेदोस्ति तद्वज्जीवेषु निर्णयः ॥ ६ ॥**

रूपमल्पत्ववर्तुलत्वादि कार्यं शयनजलानयनादि समाख्या मठाकाशघटाकाशादि । एते भेदा उपाधिभेदकृता एव तत्र तत्र व्यवहारे नत्वाकाशभेदकृताः आकाशैकत्वस्यैव सर्वसंमतत्वात् ॥ ६ ॥

मृद्विकाराघटादयो देहावयवाहस्तादयो वा यथा तथाकाशस्य विकारा अवयवा वा घटाद्याकाशाः कुतो न वस्तुतो भिन्ना इत्यत आह नेति—

नाकाशस्य घटाकाशो विकारावयवौ यथा । नैवात्मनः सदा जीवो विकारावयवौ यथा ॥ ७ ॥

सावयवत्वस्याऽसंभवान्निरवयवत्वस्य सर्वसंमतत्वाच्चेति भावः ॥ ७ ॥

नन्वेवं ब्रह्मैव जीवात्मा कथं तर्हि रागादिमलिनोति आह यथेति—

यथा भवति बालानां गगनं मलिनं मलैः । तथा भवत्यबुद्धानामात्मापि मलिनो मलैः ॥ ८ ॥

नाज्ञधीमात्रेण वस्तुतस्तदयोग्यमपिवस्तु तद्योगिभवेदिति शुद्ध एव सदात्मेति भावः ८

मरणादिदेहास्थित्यन्तमप्यज्ञदृष्ट्यैवेत्याह

मरण इति ।

**मरणे संभवे चैव गत्यागमनयोरपि । स्थितौ सर्वशरीरेषु आकाशेनाविलक्षणः ॥ ९ ॥**

मरणादिषु घटाकाशेन तुल्य आत्मेत्यर्थः । परिच्छिन्नघटेषु स्थितिर्गमनाऽऽगमनजननविनाशाश्च घटाकाशस्य प्रतीतिमात्रं न वस्तुतो यथा तथात्मनोऽपि मरणादीति भावः ॥ ९ ॥

उपाधयोऽपि न सत्या येन भेदः सिध्येदित्याशयेनाह संघाता इति—

**संघाताः स्वप्नवत्सर्वे आत्ममायाविसर्जिताः । आधिक्ये सर्वसाम्ये वा नोपपत्तिर्हि विद्यते ॥ १० ॥**

देवादि देहेषु क्वचिन्मनुष्यादिदेहापेक्षया

शक्त्याद्याधिक्ये भौतिकत्वेन सर्वदेहैःसाम्ये वा स्वीकृतेपि सत्यत्वे तु हि यतो युक्तिर्नास्त्यतः सर्वे संघातादेहाः स्वप्नवदात्मा ज्ञानकल्पिता एवेत्यर्थः ॥ १० ॥

जीवात्मनो ऽद्वितीयब्रह्मत्वे श्रुतिं दर्शयति रसादय इति—

**रसादयो हि ये कोशा व्याख्यातास्तैत्तिरीयके । तेषामात्मापरो जीवः खं यथा संप्रकाशितः ॥ ११ ॥**

अन्नमयादयो येऽकोशत्वेन वर्णितास्तेषां कोशानामात्माऽऽश्रयश्च परब्रह्मरूपो जीवः । स एवात्र प्रकरणेस्माभिरात्माह्याकाशवदित्यादिश्लोकैः खं यथेति खदृष्टान्तेनेत्यर्थः संप्रकाशितः सम्यग्वर्णितः ॥ ११ ॥

जीवब्रह्मणोरभेदे बृहदारण्यकमवतारयति द्वयोरिति—

द्वयोर्द्वयोर्मधुज्ञाने परं ब्रह्म प्रकाशितम्। पृथिव्यामुदरे चैव-तथाकाशःप्रकाशितः ॥१२॥

पृथिव्यामुदरे चैक एवाकाशो तथा तथा तयोर्गतो यो विज्ञाता सपरमात्मैवैकः एवं बहुषु पर्यायेषु द्वयोर्द्वयोरभेदमुक्त्वा ब्रह्मसर्वमित्येकं ब्रह्मनिरूपितं मधुब्रह्मविद्यातज्ज्ञानं यत्र तत्र मधुब्राह्मणे इत्यर्थः ॥ १२ ॥

ब्रह्मवेद ब्रह्मैवभवति मृत्योःसमृत्युमाप्नोति य इह नानेवपश्यतीत्यादिनैकत्वानेकत्वयोः प्रशंसानिन्दने एवं हि वेदान्तानामद्वैते तात्पर्येणैव समञ्जसेस्यातान्नन्यथेत्याह जीवेति—

जीवात्मनोरनन्यत्वमभेदेन प्रशस्यते । नानात्वं निन्द्यते यच्च तदेवं हि समञ्जसम् ॥ १३ ॥

ननु बहुस्यां प्रजायेयेत्यादि श्रुतिभिः सृष्टेः पूर्वंप्रजादिप्रसिद्धेर्द्वैतमेवसिध्यतीत्यत आह जीवेति ॥ १३ ॥

**जीवात्मनोः पृथक्त्वं यत्प्रा-गुत्पत्तेः प्रकीर्तितम् । भवि-ष्यद्वृत्त्या गौणं तन्मुख्यत्वं हि न युज्यते ॥ १४ ॥**

पूर्वाध्यासवशाद्भविष्यदध्यासनिर्देशः क्रियते श्रुत्यातो न मुख्यो वास्तवो भेदस्तदेत्यर्थः ॥ १४ ॥

नन्वस्तु प्रागद्वैतं सृष्टौसत्यां तु द्वैतमेवात आह मृदिति—

**मृल्लोहविस्फुलिङ्गाद्यैःसृष्टि-र्याचोदितान्यथा । उपायः सो ऽवताराय नास्ति भेदः कथं-च न ॥ १५ ॥**

मृल्लोहविस्फुलिङ्गादिदृष्टान्तेनोपनिषत्सु यान्यथाऽनेकप्रकारा सृष्टिरुक्ता स उपायो भेदे मिथ्यात्वप्रतिपत्त्यात्मैकत्वे बुद्धेरवतारणाय। आत्मैकत्वश्रुतीनां गत्यन्तराभावादिति भावः॥ १५॥

नन्वेकत्वमुपासनाविधिवैयर्थ्यमत आहाश्रमा इति—

**आश्रमा स्त्रिविधा हीनमध्यमोत्कृष्टदृष्टयः। उपासनोपदिष्टेयं तदर्थमनुकम्पया॥ १६॥**

आश्रमा आश्रमिणोधिकारिणः। हिरण्यगर्भाद्युपासका हीनदृष्टयः परब्रह्मोपासका मध्यमदृष्टयः अद्वैतचिद्दृष्टयउत्कृष्टाः वेदेन चोत्कृष्टदृष्टिलाभार्थं दययेयमुपासनाविहितेति न साधनं व्यर्थमिति भावः॥ १६॥

श्रुतिभिरिव द्वैतवादिभिरप्यविरोधएवात्रेत्याह स्वेति—

स्वसिद्धान्तव्यवस्थासु द्वैतिनो निश्चिता दृढम्। परस्परं विरुध्यन्ते तैरयं न विरुध्यते ॥ १७ ॥

द्वैतिनस्तुस्वस्वसिद्धान्तव्यवस्थापने दृढंनिश्चिताआग्रहवन्तोऽतस्तेपरस्परं विरोधवन्तः अयं तत्त्ववित्तु सर्वात्मेत्यात्मन्येकत्रासम्भवादेव विरोधस्य न द्वैतिभिर्विरुध्यत इत्यर्थः॥ १७ ॥

द्वैताद्वैतयोरुक्तथादौ विरोधभावेपि कार्यकारणयोः कारणमेव परमार्थ इति केन विरोधः स्यादित्याहाद्वैतमिति—

अद्वैतं परमार्थो हि द्वैतं तद्भेद उच्यते। तेषामुभयथा द्वैतं तेनायं न विरुध्यते॥१८॥

हि यतो द्वैतं तस्या द्वैतस्य भेदः कार्यमित्युच्यते एकमेवाद्वितीयं तत्तेजो ऽसृजतेत्यादि श्रुतिभिरतो वाचारम्भणश्रुत्या ऽद्वैतमेव सत्यम् । द्वैतवादिनां तु कार्यत्वं कारणत्वं चोभयभ्रान्त्यावस्तुतो द्वैतेकार्यएव तेनायमद्वैतपक्षो न विरुध्यते ॥ १८ ॥

न च सत्कार्यत्वाद् द्वैतमपि सत् रज्जुसर्पादाविव प्रतीतिकत्वात्कार्यत्वस्य जगतीत्याह माययेति—

**मायया भिद्यते ह्येतन्नान्यथा ऽजं कथंचन । तत्त्वतो भिद्यमाने हि मर्त्यताममृतं व्रजेत् ॥ १९ ॥**

एतदद्वयं वस्तुमाययैव भिद्यते प्रज्ञात्मना प्रतीयते नान्यथा वस्तुतः कथंचन परिणामादिप्रकारेण । यतोऽजं निरवयवम् । वस्तुतो ऽजस्य कार्यत्वे हि विनाशिता स्यात् ॥ १९ ॥

वेदान्ताद्वैततात्पर्यानभिज्ञतया वास्तवकार्यकारणाभाववादिनः प्रत्याहाजातस्येति—

**अजातस्यैव भावस्य जातिमिच्छन्ति वादिनः । अजातो ह्यमृतोभावो मर्त्यतां कथमेष्यति ॥ २० ॥**

निर्विकारात्मनो ये जनिं वदन्ति तन्मते कथमात्मा विनाशी स्यात् मृत्युश्च जातस्य ध्रुवः ॥ २० ॥

कुतो न विनाशी स्यादत आह नेति—

**न भवत्यमृतं मर्त्यं न मर्त्यममृतं तथा । प्रकृतेरन्यथा भावो न कथंचिद्भविष्यति ॥ २१ ॥**

आत्मनो ह्यमृतत्वस्वभावात्स्वभावस्य

चापरित्याज्यत्वादिति भावः ॥ २१ ॥

स्वभावत्वोक्तिरेवान्यथा न स्यादित्याह स्वभावेनेति—

**स्वभावेनामृतो यस्य भावो गच्छति मर्त्यताम्। कृतकेनामृतस्तस्य कथं स्थास्यति निश्चलः ॥ २२ ॥**

यस्य मते स्वभावतोऽमृत एव पदार्थः कृतकेन कार्यरूपेण पुनर्मर्त्यो भवति। तस्य मतेऽमृतत्वं न निश्चलमिति स्वभावहानिरेवेति भावः ॥ २२ ॥

तस्मात्सृष्टिश्रुतयोपवादार्थमध्यारोप एव तात्पर्यवत्यो न वस्तुतः कार्यरूपेणात्मनः परिणामादावित्याह भूतत इति।

**भूततोऽभूततो वापि सृज्यमाने समाश्रुतिः। निश्चितं यु-**

क्तियुक्तं च यत्तद्भवति नेतरत् ॥ २३ ॥

वस्तुतो जायते जगद्वाऽजातमेव मायया मिथ्यैव जात इवेत्युभयत्र सृष्टिश्रुतिः समं प्रमाणं तथापि यद्युक्तिमत्तन्निश्चितं न युक्तिहीनम् । युक्तयस्तूक्ता एव मिथ्यात्वे ॥ २३ ॥

मिथ्यात्वे श्रुतीराह नेहेति ।

नेहनानेति चाम्नायादिन्द्रो मायाभिरित्यपि । अजायमानो बहुधा मायया जायते तु सः ॥ २४ ॥

नेहनानास्ति किंचनेत्ययमाम्नायो मिथ्यात्व एव सार्थकः सतोऽपवादाऽसंभवात् । तथेन्द्रोमायाभिः पुरुरूप ईयते । अजायमानो बहुधा विजायते । इत्यादौ तु साक्षादेव मायाशब्द इति भावः ॥ २४ ॥

कार्यकारणनिषेधश्रुतेश्चासज्जगदित्याह संभूतेरिति—

संभूतेरपवादाच्चसंभवः प्रतिषिध्यते । कोन्वेनं जनयेदिति कारणंप्रतिषिध्यते ॥२५॥

अन्धन्तमः प्रविशन्ति ये संभूतिमुपासत इति कार्यब्रह्मोपासननिषेधादनित्यत्वाक्रान्तत्वेन सम्भवः कार्यमात्रं निषिध्यते तथाधिष्ठानज्ञानेन विनष्टं भ्रमं कः पुनर्जनयेदिति कारणं च प्रतिषेधतिकोन्वेनं जनयेत्पुनरितिश्रुतिः भ्रम एव कार्यकारणभावो न वास्तव इति भावः ॥ २५ ॥

द्वैताऽसत्वे श्रुत्यन्तरमाह स इति—

स एष नेति नेतीति व्याख्यातं निहनुते यतः । सर्वमग्राह्यभावेन हेतुनाऽजं प्रकाशते ॥ २६ ॥

स एष इत्युपक्रमेद्वेवाव ब्रह्मणो रूपे मूर्तं चामूर्तं चेत्यादिना व्याख्यातं सर्वं किंचिद्वस्तु तया ग्राह्यं माभूदिति हेतुना नेतिनेतीत्यपवदति यतः श्रुतिरतः केवलमजं ब्रह्मैव भातीत्यर्थः ॥ २६ ॥

द्वैतमिथ्यात्वे युक्तिमाह सत इति—

**सतो हि मायया जन्म युज्यते न तु तत्त्वतः । तत्त्वतो जायते यस्य जातं तस्य हि जायते ॥ २७ ॥**

सतः स्वरूपेण विद्यमानस्यैव जन्मरूपान्तरं माययैव सम्भवति न वस्तुतो यथा नटस्य । यस्य तु मते स्वरूपेण सदेव वस्तुत एव जन्यते पुनस्तन्मते सत एव पुनः पुनर्जननानवस्थापत्तिः ॥ २७ ॥

असतः पदार्थस्य तु वन्ध्यापुत्रादेरिव वास्तवं मायिकं वा कथमपि जन्म न सम्भवती-

त्याहासत इति—

असतो मायया जन्म तत्त्वतो नैव युज्यते । बन्ध्यापुत्रो न तत्त्वेन मायया वापि जायते ॥ २८ ॥

सदेवासदृश्यमिव माययेत्युपपादयति दृष्टान्तेन यथेति—

यथा स्वप्ने द्वयाभासं स्पन्दते मायया मनः । तथा जाग्रद्द्वयाभासं स्पन्दते मायया मनः ॥ २९ ॥

जाग्रति स्वप्ने च मन एव माययाऽनेकरूपेण स्फुरति प्रबोधेनानानुपलम्भात् ॥२९॥

नन्वेवं ब्रह्मातिरिक्तमनसो जगत्कारणत्वे कथमद्वैतमत आहाद्वयमिति—

अद्वयं च द्वयाभासं मनः स्वप्ने न संशयः। अद्वयं च द्वयाभासं तथा जाग्रन्न संशयः ॥ ३० ॥

ब्रह्मण्यध्यस्तत्वेनाद्वयं ब्रह्मात्मकमेव मनः स्वरूपतस्तत्संकल्पनेन द्वैतमिवभाति जाग्रति स्वप्ने चेत्यर्थः ब्रह्मैवाधिष्ठानं न मनः इति भावः ॥ ३० ॥

मनोमात्रं द्वैतमित्यत्र युक्तिमाह मन इति—

मनोदृश्यमिदं द्वैतं यत्किंचित्सचराचरम्। मनसो ह्यमनीभावे द्वैतं नैवोपलभ्यते॥३१॥

हि यतो विवेकवैराग्यादिना मनसः संकल्पस्य शान्तौ द्वैतं न भात्यतः सर्वमिदं दृश्यं द्वैतं मन एव ॥ ३१ ॥

अमनीभाव माहात्म्येति—

आत्मसत्यानुबोधेन न संकल्पयते यदा । अमनस्तां तदा याति ग्राह्याभावे तदग्रहम् ॥ ३२ ॥

आत्मैव सत्य इति बोधे ऽनात्मविषयकसंकल्पाभावो ऽमनीभावः । मिथ्यात्वदार्ढ्ये संकल्प्याऽभावात्तन्मनोऽग्रहं न किंचिद्गृह्णाति ॥ ३२ ॥

द्वैतमिथ्यात्वेकेनात्मा बुध्येतातदग्राह्यकल्पकमिति—

अकल्पकमजं ज्ञानं ज्ञेयाभिन्नं प्रचक्षते । ब्रह्मज्ञेयमजं नित्यमजेनाजं विबुध्यते॥ ३३॥

द्वैतकल्पनाहीनं यदनादिज्ञानं तज्ज्ञेयं ब्रह्मैव तथाच स्वयंप्रकाशत्वात्स्वरूपभूतेन

तेन ज्ञानेन स्वयमात्मावबुध्यते न मनसेति भावः ॥ ३३ ॥

तस्मात्प्रयत्नेनामनीभावः सम्पाद्य संवेद्य इत्याह निगृहीतस्येति—

**निगृहीतस्य मनसो निर्विकल्पस्य धीमतः । प्रचारः स तु विज्ञेयः सुषुप्तेन्यो न तत् समः ॥ ३ ॥**

विषयेभ्यो निगृहीतस्यातो निर्विकल्पस्य धीमतो विवेकिनो न सुषुप्त इवाविवेकिनो मनसो यः प्रचारः शिष्टचिदात्मरूपस्फुरणं स विज्ञेयो निश्चेयो नु सन्धेयः सुषुप्तौ तु न तन्निगृहीत मनः प्रचारसमो मनसः प्रचारः किन्तु तदा मनसः संकलानर्थ वीजरागादि वासनावत्वेनतमोभिभूतत्वेन चान्योऽविवेक रूप एव ॥ ३४ ॥

प्रचारभेदे हेतुमाह स्वयं लीयत इति—

लीयते हि सुषुप्ते तन्निगृहीतं न लीयते । तदेव निर्भयं ब्रह्म ज्ञानालोकं समन्ततः ॥ ३५ ॥

लीयतेऽज्ञाने तन्मनो न तूपायवशीकृतमितिभेदः एवं च तत्समाहितंमन एवाभयं ब्रह्मस्वरूप रूपज्ञानमेवालोकः प्रकाशो यस्य तत्समन्तो व्याप्तम् ॥ ३५ ॥

उक्तं ब्रह्मेदृशमित्याहाजमिति—

अजमनिद्रमस्वप्नमनामकमरूपकम् । सकृद्विभातं सर्वज्ञं नोपचारः कथंचन ॥ ३६ ॥

निद्राऽविद्या तत्कृता नात्मभानं स्वप्नः । सकृद्विभातं सदाभासमानम् । सर्वं च तज्ज्ञं ज्ञानं चेत्यखण्डबोधस्वरूपम् । एष चा-

जत्वाद्युपचारो सङ्गनिर्विशेषस्वरूपबोधनो-
पायतया ऽज्ञदृष्ट्या प्रसिद्धोऽपि न कथमपि
सम्भवति चिदन्याऽभावात्प्रबोधे ॥ ३६ ॥

ब्रह्मतद्विदोरभेददृष्ट्यापुल्लिङ्गतया प्रकारान्त-
रेण ब्रह्म निरूपयति सर्वेति—

सर्वाभिलापविगतः सर्व-
चिन्तासमुत्थितः । सुप्रशा-
न्तः सकृज्ज्योतिः समाधिर-
चलोऽभयः ॥ ३७ ॥

अभिलापो वाक् उपलक्षणत्वाद्बाह्येन्द्रिय-
हीनः । एवं चित्तान्तःकरणं तद्वर्जितः । स-
कृत्सदा ज्योतिःस्वरूपः । समाधिगम्यः । अ-
चलःस्वरूपादच्युतोऽभयो ऽविनाशी॥ ३७॥

उक्तार्थे किंचिद्विशेषमाह ग्रह इति—

ग्रहो न तत्र नोत्सर्गश्चि-
न्ता यत्र न विद्यते । आत्म-

संस्थं तदाज्ञानमजातिसमतां गतम् ॥ ३८ ॥

यत्र ब्रह्मणि काचिच्चिन्ता नास्ति न तत्र ग्रहणमुत्सर्गस्त्यागो वा सम्भवति । अथाद्वैतप्रकरणादौ यदुक्तमतो वक्ष्याम्यकार्पण्यमजातिसमतांगतमिति तदुपसंनियत आत्मेति । यदा यदद्वितीयात्मज्ञानमात्मलीनं भवति तदा तत्स्वरूपज्ञानं समतामेकरसतां गतं जनिहीनमेव भवतीत्यर्थः ॥३८॥

एवं चाद्वितीयज्ञानमेव कुतो न सर्वे कुर्वन्तीत्यत आहास्पर्शेति—

अस्पर्शयोगो वै नाम दुर्दर्शः सर्वयोगिभिः । योगिनो बिभ्यति ह्यस्मादभये भयदर्शिनः ॥ ३९ ॥

अयमद्वैतात्मबोधश्च वेदान्तेष्वस्पर्शयो-

गशब्देनासङ्गत्वान्नामप्रसिद्धो तोपकैर्दुर्ज्ञेयः किंचाभेये वस्तुतस्सकलद्वैताभावेन भयहीनेपि ब्रह्मात्मन्यात्मनो ऽसत्त्वरूपभयानुसन्धानशालिनो योगिनो ह्यस्माददद्वैतात्मनः सकाशाद्भीतिमन्तो भवन्ति । असङ्गाद्वैतनाममात्राद्भीता न तज्ज्ञाने यतन्त इति भावः ॥ ३९ ॥

तत्वज्ञानेऽप्रवृत्तौ हेत्वन्तरमाह मनस इति—

**मनसो निग्रहायत्तमभयं सर्वयोगिनाम् । दुःखक्षयः प्रबोध श्चाप्यक्षया शान्तिरेव च॥४०॥**

अभयमद्वैतं सर्वदुःखक्षयः आत्मबोधः शान्तिर्मुक्तिश्चैतत्सर्वं मनोनिग्रहाधीनं तन्निग्रहश्च दुष्कर इति मतं साधारणयोगिनाम् । प्राक्सुकृतलब्धात्मबोधानां त्वात्मातिरिक्ताभावेन साध्यसाधनकथैव नेति भावः ॥ ४० ॥

उद्वेगतज्जौदासीन्येविहायोद्यमपराणांदुष्कर-
मपि सुकरमित्याहोत्सेक इति—

उत्सेक उदधेर्यद्वत्कुशाग्रे-
णैकविन्दुना। मनसो निग्र-
हस्तद्वद्भवेदपरिखेदतः॥ ४१॥

कुशाग्रेण जलोत्क्षेप तत्परस्योदधिशोष
इव मनोनिग्रहोपि भवेदेवाखेदतः॥ ४१॥

तस्मान्मनोनिग्रहः कार्य इत्याहोपायेनेति—

उपायेन निगृह्णीयाद्विक्षि-
प्तं कामभोगयोः। सुप्रसन्नं ल-
ये चैव यथा कामो लयस्त-
था॥ ४२॥

विषयस्य कामनायां तथा भोगे विक्षिप्तं
लये निद्राऽज्ञानतमासि निर्विषयतया सुप्र-
सन्नं च मन उपायेनात्मन्येव स्थापयेत्। प्र-

सन्नस्य किमर्थं निग्रहस्तत्राह यथेति मनस आत्मविमुखताया उभयत्र तुल्यत्वादिति भावः ॥ ४२ ॥

मनोनिग्रहोपायं वैराग्यं ज्ञानं चाह दुःखमिति—

दुःखं सर्वमनुस्मृत्य कामभोगान्निवर्तयेत् । अजं सर्वमनुस्मृत्य जातं नैव तु पश्यति ॥ ४३ ॥

सर्वं द्वैतं दुःखहेतुरिति विषयेच्छा भोगतो मनो निवर्तयेत् तथा सर्वमजं ब्रह्मेति मत्वाजातं द्वैतं न भावयति पुनस्तत्त्ववित्कदापि ॥ ४३ ॥

विषयेभ्योनिवर्त्य न त्यजेत्किन्त्वात्मगं कुर्यादित्याशयेनाह लये इति—

लये सम्बोधयेच्चित्तं विक्षिप्तं शमयेत्पुनः । सकषायं

विजानीयात्सकषायं शमप्राप्तं न चालयेत् ॥ ४४ ॥

लये निद्रायां चित्तं मनो ज्ञानवैराग्याभ्यामात्माभिमुखं कुर्यात् विषयेषु चञ्चलं च ताभ्यां स्थापयेत् एवमपि स्तब्धमात्मन्यप्रवृत्तं सकषायं रागादियुतं संपन्नमिदं मन इति जानीयाज्ज्ञात्वा च ताभ्यामात्मनि नयेदिति भावः समं ब्रह्म तदाकारं तु विषयाभिमुखं न कुर्यात् ॥ ४४ ॥

सर्वतो निवृत्यात्मोन्मुखतायां मनसो यत्सुखं न तत्रासक्तो भवेत्किन्तु चिन्मयमेव मनः कुर्यादित्याह नेति—

नास्वादयेत्सुखं तत्र निःसङ्गः प्रज्ञया भवेत् । निश्चलं निश्चरच्चित्तमेकीकुर्यात् प्रयत्नतः ॥ ४५ ॥

तत्र समाध्यादौ निद्रादाविव यदाऽऽविद्यकं सुखं तत्राऽऽविद्यकमिदमिति बुद्ध्या विरक्तो भवेत् । किञ्चात्मस्थमपि चेदनात्मोन्मुखं स्यात्तर्ह्युक्तोपायाभ्यामात्मन्येव लीनं मनः कुर्यात् ॥ ४५ ॥

ब्रह्मभूतं मनो लक्षयति यदेति—

यदा न लीयते चित्तं न च विक्षिप्यते पुनः । अनिङ्गनमनाभासं निष्पन्नं ब्रह्म तत्तदा ॥ ४६ ॥

निद्राविषयाभ्यां लयविक्षेपौ तद्रहितमनिङ्गनमचलमनाभासं विषयाकारेणाऽभासमानमेवं यदा मनस्तदा तन्मनो ब्रह्मभूतमिति ज्ञेयम् ॥ ४६ ॥

ब्रह्म विशिनष्टि स्वस्थमिति—

स्वस्थं शान्तं स निर्वाण-

मकथ्यं सुखमुत्तमम् । अजमजेन ज्ञेयेन सर्वज्ञं परिचक्षते ॥ ४७ ॥

स्वस्थमद्वैतम् शान्तं विक्षेपशून्यम् स निर्वाणं सदामुक्तस्वरूपम् वागगोचरम् निरतिशयानन्दस्वरूपम् अजे स्वस्मिन्कल्पितत्वात्स्वरूपभूतज्ञेयजगदपेक्षया सर्वज्ञम् वदन्ति ब्रह्म तज्ज्ञा इति शेषः ॥ ४७ ॥

मनोनिग्रहाद्युक्तयो भ्रान्तबोधाय भ्रान्तदृष्ट्यै-
वेत्याशयेनाह नेति—

न कश्चिज्जायते जीवः सम्भवोस्य न विद्यते । एतत्तदुत्तमं सत्यं यत्र किंचिन्न जायते ॥ ४८ ॥

आत्मात्वसङ्गः सम्भवोन्यकारणं च नास्त्येवेति वस्तुतो न कोप्युत्पद्यते । यतो

यत्र ब्रह्म स्वरूपेन किञ्चिज्जायते तस्तदेत-
द्ब्रह्मोत्तमं पारमार्थिकं सत्यम् अन्यथा वि-
कारित्वेन कदाचिद्विनाशसंभवात्सापेक्ष एव
सत्यवादः स्यात्सचायुक्तश्चिदभावे जगदा-
न्ध्यप्रसङ्गादिति भावः ॥ ४८ ॥

॥ इत्यद्वैतप्रकरणम् ॥

---

अथाद्वैतविरुद्धवादप्रशमनेन परमशान्तिसम-
भीप्सया विवक्षुणा माङ्गलिकेन च तत्क्षणं चि-
त्तविषयीभूतस्वशान्तगुरून्नमश्चक्रे ज्ञानेनेत्यादि
पद्यद्वयेन ।

**ज्ञानेनाकाशकल्पेन धर्मा-
न्योगगनोपमान् । ज्ञेयाभि-
न्नेन संबुद्धस्तं वन्दे द्विपदां
वरम् ॥ १ ॥**

य आचार्यो ज्ञेय आत्मा तदभिन्नेन तत्र क-
ल्पितत्वादतएवाकाशकल्पेन शून्य तुल्येना-
किञ्चिद्भूतेनेदृशानेव धर्मान् जागतपदा-

र्थान् सम्बुद्धः सम्यग्निश्चिकायाद्वैतभावं प्रापेति यावत् तं मनुष्यवरं वन्देहमित्यर्थः ॥ १ ॥

**अस्पर्शयोगो वै नाम सर्व सत्त्वसुखोहितः । अविवादो ऽविरुद्धश्च देशितस्तं नमाम्यहम् ॥ २ ॥**

न स्पर्शः केनचित्सम्बन्धो यस्य योगस्य सनातनवस्तुनः स ब्रह्मभाव इति यावत् स चात्मत्वात् सर्वेषां सुखदो हितश्च तथा सर्वसत्ताप्रदत्वादविरुद्धो तो विरुद्धवादशून्यश्चेति वै नाम प्रसिद्धः येन चाचार्येणेदृगेष भावः स्वयं बुध्वादेशित उपदिष्टश्च शिष्येभ्यः तं नमामीति नत्याधिक्यमादराधिक्यद्योति ॥ २ ॥

विरुद्धवादं दर्शयति भूतस्येति—

भूतस्य जातिमिच्छन्ति वादिनः केचिदेव हि। अभूतस्यापरे धीरा विवदन्तः परस्परम्॥ ३॥

केचिदेव सांख्या एव विद्यमानस्योत्पत्तिमिच्छन्ति तथान्योन्यं विरुद्धं वदन्तोपरे बुद्धिमन्तो नैयायिका अविद्यमानस्य॥ ३॥

एतद्वादाभ्यां फलितमाह भूतमिति—

भूतं न जायते किंचिदभूतं नैव जायते। विवदन्तो द्वयाह्येवमजातिं ख्यापयन्ति ते॥ ४॥

यदस्त्येव न तज्जायेत पूर्वतः सत्वादेव यथात्मा यच्च नास्त्येव तदप्यसत्वादेव खपुष्पवन्नोत्पद्येतेति वदन्तो द्वैतवादिन एव

ते सुन्दोपसुन्दन्यायेन पक्षयोर्व्याघाते सर्वमजमिति फलितं कुर्वन्ति ॥ ४ ॥

वयन्तु न पक्षिणः किन्तु तदनुपस्पृष्टतदुपलक्षितपरिपक्कफलग्राहिण इत्याह ख्याप्येति—

**ख्याप्यमानामजातिं तैरनुमोदामहे वयम् । विवदामो न तैः सार्द्धमविवादं निबोधत ॥ ५ ॥**

तैः सांख्यादिभिः सह विवादं न कुर्मः किन्तु तैः फलीकृतमखिलाजत्वमङ्गीकुर्मो तश्चैतन्निर्विवादं जानीत ममानुयायिनः ॥५॥

जातस्य जन्म तु व्यर्थमित्यजातस्यैव जन्म वदन्ति न तदप्युपपद्यत इत्याशयेनाद्वैतप्रकरणोक्तविंशादिपद्यत्रयमाहाजातस्येति—

**अजातस्यैव धर्मस्य जातिमिच्छन्ति वादिनः । अजा-**

तो ह्यमृतो धर्मो मर्त्यतां कथमेष्यति ॥ ६ ॥

न भवत्यमृतं मर्त्यं न मर्त्यममृतं तथा । प्रकृतेरन्यथा भावो न कथंचिद्भविष्यति॥७॥

स्वभावेनामृतो यस्य धर्मो गच्छति मर्त्यताम् । कृतकेनामृतस्तस्य कथं स्थास्यति निश्चलः ॥ ८ ॥

धर्मस्य भावस्य पदार्थस्य उक्तार्थमेव शिष्टम् । अजातजन्मानुपपत्तिवादिनोप्यऽस्मदनुमोदित वादा इति भावः ॥ ८ ॥

प्रकृतिशब्दार्थमाह सांसिद्धिकीति—

सांसिद्धिकी स्वाभाविकी

**सहजा अकृता च या । प्रकृतिः सेति विज्ञेया स्वभावं न जहाति या ॥ ९ ॥**

स्वभावं न त्यजति यान्यथा न भवति सा प्रकृतिः यथायोगस्य साम्यक् सिद्धौ भवाऽणिमादि प्राप्तिरूपा तथा पक्ष्यादीनामाकाशगमनाद्या तथाग्न्यादेरुष्णत्वाद्या या च जलादेर्निम्नदेशगमनाद्या । इतीत्याद्या ॥ ९ ॥

अन्यथा चिन्तनमप्यनर्थायैवेत्याह जरेति—

**जरामरणनिर्मुक्ताः सर्वे धर्माः स्वभावतः । जरामरणमिच्छन्तश्च्यवन्ते तन्मनीषया ॥ १० ॥**

धर्मा आत्मानोऽजरामरप्रकृतयोपि जरा-

कारणाद्यद्यनन्यत्वमतःकार्यमजं यदि । जायमानाद्धि वै कार्यात्कारणं ते कथं ध्रुवम् ॥ १२ ॥

मायावादे त्वारोपितं कार्यमेव कारणमात्रमित्येतावदभ्युपगमान्न दोष इति भावः॥१२॥

अनुपत्यन्तरमाहाजादिति—

अजाद्वै जायते यस्य दृष्टान्तस्तस्य नास्ति वै । जाताच्च जायमानस्य न व्यवस्था प्रसज्यते ॥ १३ ॥

किंचाजान्नित्यान्महदादि जायते जनिमतो वा नाद्यः उभयसंमतदृष्टान्ताभावात् अनवस्थयाकारणत्वाविश्रान्तेरन्त्योपि नेत्यर्थः ॥ १३ ॥

श्रौताद्वैतत्ववासनया जगदनादित्वमनुपपन्नमाह हेतोरिति—

हेतोरादिः फलं येषामादिर्हेतुः फलस्य च । हेतोः फलस्य चानादिः कथं तैरुपवर्ण्यते ॥ १४ ॥

हेतुः कर्म । आदिः कारणम् । फलं देहादिः । येषां मते देहादिः कर्मणः कारणं देहादेश्च कर्म कारणम् । तैरेवमुभयोरादित्वमुक्त्वा कथं पुनरनादित्वं तयोरुपवर्ण्यते विरुद्धम् ॥ १४ ॥

हेतुफलयोरुक्तं परस्परकार्यकारणत्वं दृष्टविरुद्धं नहि पुत्राज्जन्म पितुर्दृश्यत इत्याह हेतोरिति—

हेतोरादिः फलं येषामादिर्हेतुः फलस्य च । तथा ज-

न्म भवेत्तेषां पुत्राज्जन्म पितुर्यथा ॥ १५ ॥

तयोर्युगपज्जन्माङ्गीकारेनोक्तविरोध इति चेत्तत्राह सम्भव इति—

सम्भवे हेतुफलयोरेषितव्यः क्रमस्त्वया। युगपत्संभवे यस्मादसम्बन्धो विषाणवत् ॥ १६ ॥

युगपज्जायमानयोर्विषाणयोः परस्परकार्यकारणभावो न यथा तथा युगपत्संभवे हेतुफलयोरपि स सम्बन्धो न स्यादिष्यते च तयोः स सम्बन्धस्त्वयातस्तयोः सम्भवे जन्मनि क्रमोन्वेष्टव्यः कस्य पूर्वं जन्मेति। दुष्परिहरो विरोध इति भावः ॥ १६ ॥

परस्परासम्बन्धमुपपादयति—

फलादुत्पद्यमानः सन्नते हे-

तुः प्रसिध्यति । अप्रसिद्धः कथं हेतुः फलमुत्पादयिष्यति ॥ १७ ॥

फलादुत्पत्स्यते यो हेतुः सफलात्पूर्वं न प्रसिध्यति नास्ति यो नास्ति स कथमुत्पादयेत्फलम् एवं च क्रमाभावे न कार्यकारणस्पर्शः कदापि ॥ १७ ॥

तथाच क्रमोवाच्य इत्याह यदीति ।

यदि हेतोः फलात्सिद्धिः फलसिद्धिश्च हेततः । कतरत्पूर्वनिष्पन्नं यस्य सिद्धिरपेक्षया ॥ १८ ॥

द्वयोर्मध्ये कतरत्पूर्वसिद्धं यस्यापेक्षया यतो परस्य पश्चात्सिद्धिस्तद्वदेत्यर्थः अन्योन्याधीनसिद्धिकयोरन्योन्यतः पूर्वमसिद्धिरेवेति भावः ॥ १८ ॥

दुर्निरूप्यत्वमभिप्रेत्य क्रमस्याहाशक्तिरिति—

**अशक्तिरपरिज्ञानं क्रमकोपोथवा पुनः। एवं हि सर्वथा बुद्धैरजातिः परिदीपिता॥१९॥**

यद्युच्येत वक्तुं न शक्यते क्रमो ज्ञायते वा नाथवापूर्वोक्तक्रमस्य कोपोन्यथाभावो विपरीतः क्रम इति। एवमपि बुद्धैः पण्डितैस्तैरनुत्पत्तिरेव सर्वेषां सर्वथा सूचिता भवेत्॥ १९॥

ननु लोके बीजाङ्कुरयोः प्रसिद्धा परस्पर-कारणतात आह बीजेति—

**बीजाङ्कुराख्यो दृष्टान्तः सदा साध्यसमो हि सः। न हि साध्यसमो हेतुः सिद्धौ साध्यस्य युज्यते॥ २०॥**

तत्रापि क्रमस्योक्तरीत्या दुर्निरूप्यत्वेन दार्ष्टान्तिकसम एव दृष्टान्तोपि विप्रतिपन्नः तथाच नैष दृष्टान्तो हेतुः परस्परकारणता सिद्धावुपयुज्यते। अथ परस्परंप्रति परस्परस्यादित्वमपिप्रसिद्धमिति नैतद्दृष्टान्ते नानादित्वमपि सिध्यतीत्युक्तं चतुर्दश इति भावः ॥ २० ॥

अजातिः परिदीपितेत्यत्र प्रकारमाह पूर्वेति—

**पूर्वापरा परिज्ञानमजातेः परिदीपकम्। जायमानाद्धि वै धर्मात्कथं पूर्वं न गृह्यते ॥२१॥**

कार्यकारणसम्बन्धस्य नियतत्वाज्ज्ञातं चेदिदं कार्यमिति तर्हि तस्मात् कार्यान्नियतपूर्वं कारणं कथं न ज्ञायेत यदि नैव ज्ञायेत पूर्वापरभावस्तर्हि तयोः कार्यकारणभावोपि नैव ज्ञायेतेत्यज्ञानेनाजातिरनुत्पत्तिरेव बोधिता तयोः। तत्तत्प्रति तस्य तस्य कार-

णत्वे तु पूर्वापरपरिज्ञानेपिसर्गादावाद्यफले पूर्वहेतोरनिश्चय एवेति भावः ॥ २१ ॥

प्रकारान्तरेणानुत्पत्तिर्निरूप्यते स्वत इति–

**स्वतो वा परतो वापि न किंचिद्वस्तु जायते। सदसत्सदसद्वापि न किंचिद्वस्तु जायते ॥ २२ ॥**

नहि किंचित्स्वस्मात्स्वयं जायते पूर्वमसत्त्वात्स्वस्य। न वा परतो घटादेः पटादि। ननु परतो मृदादेर्जायत एव घटादिरिति चेद्भ्रान्तिरियम् तथाहि सदेवघटादि जायतेऽथासत् किं वो भयम् नाद्यः सिद्धत्वात् वन्ध्यापुत्रादेरुत्पत्तिप्रसङ्गान्न द्वितीयः उभयत्वं तु विरुद्धमेवेति ॥ २२ ॥

वादिमतेनुत्पत्तिरेव फलतीति सूचयति प्रकारान्तरेण हेतुरिति—

हेतुर्न जायते नादेः फलं चापि स्वभावतः । आदिर्न विद्यते यस्य तस्य ह्यादिर्न विद्यते ॥ २३ ॥

अनादिनी हेतुफले जायेते च परस्परादिति मते अनादेः परस्पराद्धेतुः फलं च नैव जायत इत्येवं वाच्यम् कुतः यस्यादिः कारणं न तस्यादिर्जन्मापि नेति स्वभावात् ॥ २३ ॥

एवमजं ज्ञप्तिमात्रमखिलमितिसिद्धम् तत्र ज्ञप्तौ बलाज्ज्ञेयापत्तिरिति शङ्कयति प्रज्ञप्तेरिति—

प्रज्ञप्तेः स निमित्तत्वमन्यथा द्वयनाशनः । संक्लेशस्योपलब्धेश्च परतन्त्रास्तिता मता ॥ २४ ॥

ज्ञप्तेः सनिमित्तत्वं सविषयत्वमावश्यकमन्यथा निर्विषयत्वे द्वैतप्रतीत्युच्छेदाज्ज्ञप्तेरैक्यादिति भावः किंचाग्न्यादिबाह्यार्थद्वैताभावे दाहादिक्लेशो न स्यादतः परेषां द्वैतवादिनां तन्त्राणां शास्त्राणामेवास्तितता यथार्थता ॥ २४ ॥

समाधत्ते प्रेति।

**प्रज्ञप्तेः सनिमित्तत्वमिष्यते युक्तिदर्शनात् ॥ निमित्तस्यानिमित्तत्वमिष्यते भूतदर्शनात् ॥ २५ ॥**

तथाप्यस्माभिरुक्ताज्ज्ञप्तिवैचित्र्यक्लेशोपलम्भयुक्तिद्वयाज्ज्ञप्तेः सविषयत्वं तथा भूतदर्शनाद्वस्तुभूतकारणदृष्ट्या निमित्तस्य द्वैतस्यानिमित्तत्वं चावस्तुत्वेन ज्ञप्तिवैचित्र्यादिं प्रतीष्यते। मृद्दृष्टौ मृन्मयद्वैताप्र-

तीतेरवस्तुभूतं घटादि न कस्यचिन्निमित्तं भवितुमर्हतीत्यद्वैत एव सकलैतज्जगद्व्यवस्थोपपादनीयास्वाप्नजगद्व्यवस्थावदिति भावः ॥ २५ ॥

तस्मान्मृदेव न मृन्मयमितिवन्मन एव न मनोविषयद्वैतमित्याह चित्तमिति—

**चित्तं न संस्पृशत्यर्थं नार्थाभासं तथैव च । अभूतो हि यतश्चार्थो नार्थाभासस्ततः पृथक् ॥ २६ ॥**

यतः सर्वोपि पदार्थो न भूतो जात एव न अवस्त्वति यावत् पदार्थाभासस्तु मनसः पृथक् नास्ति यथा रज्ज्वही रज्जुतः तस्मादर्थमर्थाभासं वा न विषयी करोति मनः ॥ २६ ॥

तर्हि सविषयत्वभानं मनसः किं भ्रान्तिर्नेत्याह निमित्तमिति—

निमित्तं न सदा चित्तं संस्पृशत्यध्वसु त्रिषु । अनिमित्तो विपर्यासः कथं तस्य भविष्यति ॥ २७ ॥

त्रिष्वपि कालेषु कदापि यदि मनो न विषयं स्पृशति तर्हि विषयसंस्कारादि निमित्ताभावादतस्मिंस्तद्बुद्धिर्विपर्यासो भ्रान्तिः कथं भवेत् किन्तु स विषयत्वेन भानं स्वभावो मनस इति भावः ॥ २७ ॥

फलितमजातवादं वदन् ज्ञप्तिजातिवादिनमुपहसति तस्मादिति—

तस्मान्न जायते चित्तं चित्तदृश्यं न जायते । तस्य पश्यन्ति ये जातिं खे वै पश्यन्ति ते पदम् ॥ २८ ॥

यस्माद्विद्यमानमेवाखिलं भाति भानमेवाखिलात्मनाभाति तस्मान्न भानमन्यद्वा किंचिज्जनिमत् ये तु चित्तस्य जनिं पश्यन्ति ते तु भुवीवाकाशेपि पक्ष्यादि पदमभिव्यक्तं पश्यन्ति ॥ २८ ॥

फलितमाहाजातमिति—

**अजातं जायते यस्मादजातिः प्रकृतिस्ततः । प्रकृतेरन्यथा भावो न कथंचिद्भविष्यति ॥ २९ ॥**

यतोऽजातमेव मनोब्रह्म जगज्जायत इव ततो ऽजातिर्ब्रह्मणः प्रकृतिः स्वभावः स चात्मरूपत्वादचल इति स्थितमिति भावः ॥ २९ ॥

अनादिः संसारो मोक्षश्च सादिरात्मज्ञानज इति मते दोषमाहानादेरिति—

**अनादेरन्तवत्त्वं च संसा-**

रस्य न सेत्स्यति। अनन्ततां चादि मतो मोक्षस्य न भविष्यति ॥ ३० ॥

अनादिश्चेद्विनाशी न स्यात् संसारो यथात्मा मोक्षस्तु नश्येदेव यदि सादिर्घटादिर्यथा तस्मादद्वैतमिति भावः ॥ ३० ॥

जगन्मोक्षौ न वस्तुत इत्याशयेन द्वितीयप्रकरणश्लोकौ षष्ठसप्तमावाहादाविति—

आदावन्ते च यन्नास्ति वर्तमानेपि तत्तथा। वितथैः सदृशाः सन्तोऽवितथा इव लक्षिताः ॥ ३१ ॥

सप्रयोजनता तेषां स्वप्ने विप्रतिपद्यते। तस्मादाद्यन्त

वत्त्वेन मिथ्यैव खलु ते स्मृताः ॥ ३२ ॥

सहेतुदृष्टान्तेन मिथ्यात्वमाह सर्वे इति—

सर्वे धर्मा मृषा स्वप्ने कायस्यान्तर्निदर्शनात् । संवृतेऽस्मिन्प्रदेशे वै भूतानां दर्शनं कुतः ॥ ३३ ॥

कायस्यान्तरल्पावकाशे दृष्टत्वाद्यदि स्वप्ने ऽर्थामृषा तर्हि संवृते निरवकाशे ऽखण्डैकरसे चिदात्मनि पृथिव्यादीनां दर्शनं कुतो न मृषा ॥ ३३ ॥

ननु देहाद्बहिः स्वस्वदेश एव दृश्यन्तेर्थाः स्वप्न इति चेत्तत्राह नेति—

न युक्तं दर्शनं गत्वा कालस्यानियमाद् गतौ । प्रतिबु-

**द्धश्च वै सर्वस्तस्मिन् देशे न विद्यते ॥ ३४ ॥**

अतिदूरगमत्याशु पश्यति किंच देशान्तरस्थं पश्यन्भग्ननिद्रो न तदार्थदेशे भवति किन्तु स्वापदेश एवातश्च न गत्वा पश्यति ॥ ३४ ॥

दृष्टान्तेऽर्थासत्वं दर्शयति मित्राद्यैरिति—

**मित्राद्यैः सह संमन्त्र्य सम्बुद्धो न प्रपद्यते । गृहीतं चापि यत्किंचित्प्रतिबुद्धो न पश्यति ॥ ३५ ॥**

इदं मया कर्तव्यमिति संमन्त्र्य प्रबुद्धो न तत्कर्तुं प्रवर्तते प्राप्तं च धनादिहस्तगं न पश्यत्याशुबुद्धः ॥ ३५ ॥

**स्वप्ने चावस्तुतः कायः पृ-**

थगन्यस्य दर्शनात् । यथा कायस्तथा सर्वं चित्तदृश्यमवस्तुकम् ॥ ३६ ॥

किंच शयनस्थाने निश्चलस्य देहान्तरस्य दर्शनात्स्वप्ने विहारीदेहो मिथ्येति सिद्धेखिलस्वाप्नमिथ्यात्वे चित्तदृश्यत्वस्य तुल्यत्वेन जाग्रत्पदार्था अपि मिथ्याभूता एवेति भावः ॥ ३६ ॥

जाग्रदपेक्षया मिथ्यास्वप्नः स्वप्नापेक्षया च सज्जागरितम् प्रतीतिश्च द्वयोस्तुल्यैवेति तुल्यमेव द्वयमित्याशयेनाह ग्रहणादिति—

ग्रहणाज्जागरितवत्तद्धेतुः स्वप्न इष्यते। तद्धेतुत्वात्तु तस्यैव सज्जागरितमिष्यते ॥३७॥

स्वप्नो जागरितहेतुको जागरितकार्यम् जागरितं यथा गृह्यते तथैव गृह्यमाणत्वात्

तथाच मिथ्येति भावः जागरितं तु स्वप्नस्य हेतुत्वात्तस्यैव स्वप्नद्रष्टुरेव मते कारणधिया सन्नवस्तुत इति भावः॥ ३७॥

वस्तुस्थितिमाहोत्पादस्येति—

**उत्पादस्याप्रसिद्धत्वादजं सर्वमुदाहृतम्। न च भूतादभूतस्य सम्भवोस्ति कथंचन॥ ३८॥**

अभूतस्याविद्यमानस्य नृशृङ्गादेरुत्पत्तेर्विद्यमानवस्तुनः सकाशादसंभवेनात्मातिरिक्तानामुत्पादस्योत्पत्तेरसिद्ध्या सर्वमात्मैव॥ ३८॥

सर्वाजत्वे कथमुक्तं स्वप्नोजाग्रद्धेतुक इतीत्यत आहासदिति—

**असज्जागरिते दृष्ट्वा स्वप्ने पश्यति तन्मयः। असत्स्वप्ने**

पि दृष्ट्वा च प्रतिबुद्धो न पश्यति ॥ ३९ ॥

रज्जुसर्पवदसदविद्यमानमेवाखिलदृश्यमुभयत्र तथापि जागरिते यत्पश्यति तद्वासनयैव तथैव पश्यति स्वप्ने न तु स्वप्नदृष्टवासितो जाग्रत्तथा पश्यति प्रायः एतावतैव जागरिते कारणतोक्ता न परमार्थत इति भावः ॥ ३९ ॥

वस्तुतो प्रसिद्धिमेव कार्यकारणभावस्य दर्शयति नेति—

नास्त्यसद्धेतुकमसत्सदसद्धेतुकं तथा । सच्चसद्धेतुकं नास्ति सद्धेतुकमसत्कुतः ४०

लोके पदार्थो द्विविधः सद्घटाद्यसच्चशशशृङ्गादि तत्रासतो सत्प्रतिसत्प्रति वा हेतुत्वं कार्यत्वं वा न संभवत्यसत्त्वादेव स-

च्च घटादि न सदन्तरपटादि प्रति कारणं भवति सन्मृदादिभवत्येव सदन्तरघटादि प्रतिकारणमिति तु भ्रान्तिमात्रमुभयत्र मृत्त्वाद्य विशेषादिति न किंचित्कार्यं कारणं चेति भावः ॥ ४० ॥

स्वप्ने न जागरितं कारणं किन्त्वविवेक एवेत्याशयेनाह विपर्यासादिति—

विपर्यासाद्यथा जाग्रदचिन्त्यान्भूतवत्स्पृशेत् । तथा स्वप्ने विपर्यासाद्धर्मांस्तत्रैव पश्यति ॥ ४१ ॥

यथा जाग्रत्पुमानविवेकादचिन्त्यानसतो रज्जुसर्पादीन्सत्यवत्कल्पयति तथा स्वप्नपदार्थानपि स्वप्न एव न जागरितहेतुकान् ॥ ४१ ॥

सर्वमजं चेच्छारीरकादौ स्रष्टुर्युक्तिः कथमत आहोपेति—

उपलम्भात्समाचारादस्तिवस्तुत्ववादिनाम् । जातिस्तु देशिता बुद्धैरजातेस्त्रसतां सदा ॥ ४२ ॥

जगतः प्रत्यक्षत्वाद्वर्णाश्रमादि धर्माचरणाच्चास्ति जगद्वस्त्विति वादिनामजातवादात्त्रसतां कुण्ठितधियां मन्दविवेकिनामर्थे बुद्धैः पण्डितैः सूत्रकारादिभिः सृष्टिरुपदिष्टा अद्वैतकल्पनाय सृष्टिप्रक्रिया कल्पितेति भावः ॥ ४२ ॥

मृत्योः समृत्युमाप्नोतीत्यादि श्रुतेर्मन्दाविवेकिनां मुक्तिः किं संदिग्धा नेत्याहाजातेरिति—

अजातेस्त्रसतां तेषामुपलम्भाद्वियन्ति ये । जातिदोषा न सेत्स्यन्ति दोषोप्यल्पो भविष्यति ॥ ४३ ॥

उपलम्भाद्धेतोर्ये वियन्त्यद्वैतात्मनश्च्यवन्ते विविधं द्वैतं वावगच्छन्ति तेषां न सर्वे जनिदोषाः सर्वयोनिभ्रमणादयो भवन्ति किन्तु यतते च ततो भूयः संसिद्धौ कुरुनन्दनेत्याद्युक्तेरल्प एव ॥ ४३ ॥

असन्मयेप्युपलम्भव्यवहारयोर्दर्शनान्न जगत्सत्ता ताभ्यां सेत्स्यतीत्याहोपलम्भादिति—

**उपलम्भात्समाचारान्मायाहस्ती यथोच्यते । उपलम्भात्समाचारादस्ति वस्तु तथोच्यते ॥ ४४ ॥**

दर्शनात्स्कन्धारोहादिव्यवहाराच्च मायागजे यथा गजोस्तीत्युच्यते ऽज्ञैस्तथा जगद्वस्तुन्यपीत्यर्थः ॥ ४४ ॥

यद्द्वैतात्मना भाति तदधिष्ठानमाह जात्याभासमिति—

जात्याभासं चलाभासं वस्त्वाभासं तथैव च। अजाचलमवस्तुत्वं विज्ञानं शान्तमद्वयम् ॥ ४५ ॥

यदजमपिजातिवज्जातमिदामिदं जायते जनिष्यते चेतिवदवभासते तथाऽचलमपि चलमिव चलतीव तथाऽवस्त्वघटाद्यपि वस्तुवद्घटादिवद्भासते तदद्वयं शान्तं विज्ञानम् ॥ ४५ ॥

अजत्वमुपसंहरत्येवमिति—

एवं न जायते चित्तमेवं धर्मा अजाः स्मृताः। एवमेव विजानन्तो न पतन्ति विपर्यये ॥ ४६ ॥

एवमुक्तहेतुभिर्यतश्चित्तं जीवात्मानश्च

न जायन्ते तोऽद्वयचिदात्मतत्त्वज्ञा न पुन-
रविवेके पतन्ति ॥ ४६ ॥

अच्युतस्वरूपस्य मिथ्यानेकधाभानं स-
दृष्टान्तमाहर्ज्विति—

ऋजुवक्रादिकाभासमला-
तस्पन्दितं यथा । ग्रहणग्रा-
हकाभासं विज्ञानस्पन्दितं त-
था ॥ ४७ ॥

यथोल्मुकस्य स्पन्दितं दीप्तिश्चालनेना-
नेकधा भाति तथा विज्ञानस्य चितः स्फू-
र्तिर्ज्ञानज्ञात्राद्यनेकाकारेणाविद्यया ॥ ४७ ॥

अनेकधाऽभानं दृष्टान्तेनाहास्पन्दमानमिति—

अस्पन्दमानमलातमना-
भासमजं यथा । अस्पन्द-
मानं विज्ञानमनाभासमजं
तथा ॥ ४८ ॥

न निर्गता अलातात्ते द्रव्यत्वाभावयोगतः । विज्ञानेऽपि तथैव स्युराभासस्याविशेषतः ॥ ५० ॥

द्रव्यत्वाभावादवस्तुत्वात् ना वस्तुनः प्रवेशो निर्गमो वास्तं भवतीति भावः विज्ञाने चिन्मात्रे दृश्याभासा अपि तथैव ऋज्वाद्याभासा इवैव मिथ्यैव स्युराभासत्वाविशेषात् ॥ ५० ॥

तथैवेत्युक्तं व्यक्तं करोति द्वाभ्याम्—

विज्ञाने स्पन्दमाने वै नाभासा अन्यतो भुवः । न ततोऽन्यत्र निस्पन्दान्न विज्ञानं विशन्ति ते ॥ ५१ ॥

न निर्गतास्ते विज्ञानादद्र-

व्यत्वाभावयोगतः । कार्य-
कारणताभावाद्यतो चिन्त्यः
सदैव ते ॥ ५२ ॥

सार्द्धपद्यार्थो दृष्टान्तोक्तेनालाते स्पन्द-
मान इत्यादि सार्द्धार्थेनसमानः। तस्मात्का-
र्यकारणभावाभावात्ते चिदन्य आभासाः स
दैवाचिन्त्यानिरूपयितुमशक्या यतोतो मि-
थ्येति शेषः ॥ ५२ ॥

कार्यकारणभावश्च द्रव्ययोरेव भिन्नयोरेव कल्पि-
तोज्ञैर्नचात्मनि तत्संभवतीत्याह द्रव्यमिति—

द्रव्यं द्रव्यस्य हेतुःस्याद-
न्यदन्यस्य चैव हि। द्रव्यत्व-
मन्यभावो वा धर्माणां नोप-
पद्यते ॥ ५३ ॥

धर्मो निर्विकारश्चिदात्मा न द्रव्यमस-

तः कुतश्चिदन्यो वा नेति कार्यं कारणं वा नेति भावः

फलितं सूचयत्येवमिति—

**एवं न चित्तजा धर्माश्चित्तं वापि न धर्मजम् । एवं हेतुफलाजातिं प्रविशन्ति मनीषिणः ॥ ५४ ॥**

एवमुक्तहेतुभिः । धर्माघटादयः । तथा हेतोः फलं फलाद्धेतुर्वा न जायत इत्यजातवादमेव निश्चिन्वन्तिचिदात्मधियः ॥५४॥

अनात्मधियो मुमुक्षून्प्रत्याह यावदिति—

**यावद्धेतुफलावेशस्तावद्धेतुफलोद्भवः । क्षीणे हेतुफलावेशे नास्तिहेतुफलोद्भवः ॥५५॥**

अनेन धर्माधर्माख्यहेतुनावश्यं मया फलं भोक्तव्यमित्यास्था यावत्तावद्धेतुफलोत्प-

त्तिर्न निवर्तत इति न सा वासनीया हृदि मुमुक्षुभिः ॥ ५५ ॥

हेतुफलोत्पत्त्यनिवृत्तौ दोषमाह यावदिति—

**यावद्धेतुफलावेशः संसारस्तावदायतः । क्षीणे हेतुफलावेशे संसारं न प्रपद्यते ॥ ५६ ॥**

यावद्वासनातावद्धेतुफलोत्पत्त्याजननमरणसंसारो वर्द्धत एव ॥ ५६ ॥

ननु जननमरणोक्तिरद्वैतमतेन घटतेऽत आह संवृत्येति—

**संवृत्या जायते सर्वं शाश्वतं नास्ति तेन वै । सद्भावेन ह्यजं सर्वमुच्छेदस्तेन नास्ति वै ॥ ५७ ॥**

संवृत्याऽविद्यया सर्वमुत्पद्यते इव तेन

किंचिन्नित्यं नास्ति वस्तुतस्तु चिद्ब्रह्मरूपेण सर्वमजमेवेति बिनाशोप्यप्रसिद्धः॥५७॥

अनन्तरोक्तं व्यक्तीकरोति धर्मा इति—

**धर्मा य इति जायन्ते जायन्ते ते न तत्त्वतः । जन्ममायोपमं तेषां सा च माया न विद्यते ॥ ५८ ॥**

इत्युक्तरीत्या ऽविद्यया ये धर्माश्चराचरा जायन्ते न ते वस्तुतो जायन्तेऽतस्तेषां जन्ममाया माया च नाम तस्यायानास्ति तस्मात्स्वप्न इवासदेव जन्ममरणवचनमिति भावः ॥ ५८ ॥

मायोपमत्वं स्फुटयति यथेति—

**यथा मायामयाद्बीजाज्जायते तन्मयोऽङ्कुरः। नासौ नि-**

त्यो नचोच्छेदी तद्धर्मेषु यो-
जना ॥ ५९ ॥

मायाव्यारोपिताम्रादि वीजस्याङ्कुरोपि मायैवेति न स नित्यो विनाशी वा वस्तुतोनुत्पन्नत्वाद्यथा तथा धर्मा अपि॥५९॥

वस्तुतो नचितोन्यदित्यत्रासम्भवग्रस्तोखिल
चोद्यप्ररोह इत्याह नेति—

नाजेषु सर्वधर्मेषु शाश्वता
शाश्वताभिधा । यत्र वर्णा न
वर्तन्ते विवेकस्तत्र नोच्यते ६०

यत्र चिदात्मनि वर्णावाचो न प्रवर्तन्ते न तत्रेदृशो वेदृश इत्यादिः कोपि विवेको वक्तुं शक्यः धर्माश्चचिदात्मान इति न तत्र नित्यानित्यवचनं सम्भवति ॥ ६० ॥

यद्यपि चिन्मात्रमेवास्ति वस्तुतस्तथाप्यविद्यया
स्वप्न इवाविद्यकं मन एव द्वैतात्मना स्फुरती-
त्याह यथेति—

यथा स्वप्ने द्वयाभासं चित्तं चलति मायया । तथा जाग्रद् द्वयाभासं चित्तं चलति मायया ॥ ६१ ॥

नन्वेवं मनसाद्वैतापत्तिरत आहाद्वयमिति—

अद्वयं च द्वयाभासं चित्तं स्वप्ने न संशयः । अद्वयं च द्वयाभासं तथा जाग्रन्न संशयः ॥ ६२ ॥

अद्वितीयं मन एव यथा स्वप्ने नानाभासमेवमद्वयं चिदेव मनः प्रभृतिद्वयाभासम् इमे च कारिके ऽद्वैतप्रकरणेप्यष्टाविंशश्लोकानन्तरमुक्तार्थे ॥ ६३ ॥

विधान्तरेण द्वैताभावमाह स्वप्नदृगिति—

स्वप्नदृक् प्रचरन्स्वप्ने दिक्षुवै

दशसुस्थितान् । अण्डजान्
स्वेदजान्वापि जीवान्पश्यति
यान्सदा ॥ ६४ ॥ स्वप्नदृक्
चित्तदृश्यास्ते न विद्यन्ते ततः
पृथक् । तथातद्दृश्यमेवेदं
स्वप्नदृक्चित्तमिष्यते ॥६४॥

स्वप्ने गच्छन्स्वप्नद्रष्टा दिक्षु यान्पश्यति ते द्रष्टुर्मनसो दृश्यत्वान्न मनसो भिन्ना यथा तथा मनोपि स्वप्नदृग्दृश्यमिति न स्वप्नद्रष्टुर्भिन्नम् ॥ ६३ ॥ ६४ ॥

स्वप्नेदर्शितां विधां जागरितेव तारयति
चरन्निति द्वाभ्याम्—

चरञ्जागरिते जाग्रद्दिक्षु वै
दश सुस्थितान् । अण्डजान्
स्वेदजान्वापि जीवान्पश्याति

यान्सदा ॥ ६५ ॥ जाग्रच्चित्तेक्षणीयास्ते न विद्यन्ते ततः पृथक् । तथा तद्दृश्यमेवेदं जाग्रतश्चित्तमिष्यते ॥ ६६ ॥

एवं जाग्रत्पुमान्यान्पश्यति तेपि तच्चित्तविषयत्वान्न चित्तात्पृथक् चित्तं चात्मभास्यमिति नात्मनः पृथक् ॥ ६६ ॥

उक्तमेवान्यविधयाहोभेहीति ।

उभे ह्यन्योन्य दृश्यते किंतदस्तीति चोच्यते । लक्षणाशून्यमुभयं तन्मतेनैव गृह्यते ॥ ६७ ॥

हि यतस्ते चित्ततद्दृश्ये विषयविषयितया परस्परनिरूप्ये तस्तदुभयं किमस्ति किन्तु नास्त्येवेति चोच्यते कैश्चित्

नान्योन्याश्रयकार्याणि सिध्यन्तीति भावः एवं च प्रमाणशून्यमप्युभयं तन्मतेन वासनया तत्तद्भावनेनैवासदेव गृह्यते प्रतीयते ॥ ६७ ॥

कथं तर्हि जन्मादिव्यवहारोऽत आह यथेति—

यथा स्वप्नमयो जीवो जायते म्रियतेपि च। तथा जीवा अमी सर्वे भवन्ति न भवन्ति च ॥ ६८ ॥ यथा मायामयो जीवो जायते म्रियतेपि च। तथा जीवा अमी सर्वे भवन्ति न भवन्ति च ॥ ६९ ॥ यथा निर्मितको जीवो जायते म्रियतेपि वा। तथा

**जीवा अमी सर्वे भवन्ति न भवन्ति च ॥ ७० ॥**

स्वप्नेन नटमायया वौषध्यादिना वाभिव्यक्तो यथा दृश्यते जन्मादियुग्जीवस्तथा जाग्रज्जीवानामपि जन्मादिव्यवहारः प्रतीतिमात्रं न वस्तुतः ॥६८॥६९॥७०॥

वस्तुतो यत्तदाह नेति—

**न कश्चिज्जायते जीवः संभवोस्य न विद्यते । एतत्तदुत्तमं सत्यं यत्र किंचिन्न विद्यते ॥ ७१ ॥**

सम्भवः कारणम् । तदेतद्ब्रह्म वस्तुतः सत्यम् । उक्तार्थेयमद्वैतप्रकरणान्ते ॥७१॥

ब्रह्मस्वरूपमाह चित्तेति—

**चित्तस्पन्दितमेवेदं ग्राह्य**

ग्राहकवद्द्वयम् । चित्तं निर्विषयं नित्यमसङ्गं तेन कीर्तितम् ॥ ७२ ॥

यतो न किंचिज्जायतेऽतो दृश्यद्रष्टृरूपमिदं द्वैतं चित्तविलासमात्रम् तथाच तेन द्वैतरूपविषयाभावेन निर्विषयं चित्तं ज्ञानमेव नित्यमसङ्गं ब्रह्मोक्तम् ॥ ७२ ॥

शास्त्रादेर्विषयस्य जागरूकत्वात्कथमसङ्गताऽत आह य इति—

योऽस्ति कल्पितसंवृत्त्या परमार्थेन नास्त्यसौ । परतन्त्राभिसंवृत्त्या स्यान्नास्ति परमार्थतः ॥ ७३ ॥

चिद्बोधाय कल्पिताविद्यया यः शास्त्रादिपदार्थोऽस्ति तथा परेषां नैयायिकादीनां

शास्त्ररूपाविद्यया वा यो द्रव्यादिपदार्थः सनास्त्येव वस्तुतः अयं भावः वेदान्तिनयेन्यनये वा चिदात्मा नवबोधेन सर्वं कल्पितमेवेति ॥ ७३ ॥

तर्हि ब्रह्मत्वाजत्वासङ्गत्वाद्यपि कल्पितमेव स्यादित्याशङ्कां परिहरतीष्टापत्त्याज इति—

**अजः कल्पितसंवृत्त्या परमार्थेन नाप्यजः । परतन्त्राविनिष्पत्त्या संवृत्या जायते तु सः ॥ ७४ ॥**

संवृत्या ऽविद्यया यापरशास्त्रसिद्धिस्तया तदपेक्षया स आत्माजो जायते च वस्तुतस्तु नाजोपि । जायते इत्याद्यन्योक्तिसापेक्षाजत्वाद्युक्तिरित्युभयमसंगतमितिभावः ॥ ७४ ॥

अजत्वजातत्वादिद्वैतमविद्याकृतमित्युक्तमतस्तन्निवृत्तिरप्यविद्यासिद्धा वस्तुभूतविषयै-

व मिथ्यैवेत्याशयेनाहाभूतेति—

अभूताभिनिवेशोस्ति द्वयं तत्र न विद्यते। द्वयाभावं स बुद्ध्वैव निर्निमित्तो न जायते ॥ ७५ ॥

संवृत्त्या जायतेतो वस्तुतोऽभूत एव द्वैतेस्तीदं द्वैतमित्यभिनिवेशो हठप्रत्ययोस्ति तत्र प्रत्यये द्वयन्नास्ति वस्तुतोतो द्वैताभावबोधेनाभिनिवेशरूपनिमित्तस्य कारणस्य निवृत्त्या न पुनर्जायते मुच्यत इति भावः ॥ ७५ ॥

उक्तं व्यक्तयति यदेति—

यदा न लभते हेतूनुत्तमाधममध्यमान्। तदा न जायते चित्तं हेत्वभावे फलं कुतः ॥७६॥

यदि निर्द्वैतबोधेन पुण्यपापतदुभयरूपानुत्तमाधममध्यमयोनिजन्महेतुन्न करोति हर्दि तर्हि न किञ्चित्पुनर्भवति ॥ ७६ ॥

तदा न जायते इत्युक्त्वापूर्वं जायत इति भ्रममपाकरोत्यनिमित्तस्येति—

**अनिमित्तस्य चित्तस्य यानुत्पत्तिः समाऽद्वया । अजातस्यैव सर्वस्य चित्तदृश्यं हि तद्यतः ॥ ७७ ॥**

तदद्वैतं यतश्चित्तदृश्यं मिथ्येति यावत् अतः पूर्वमपि बोधात्सर्वरूपेणाजातस्यैव चित्तस्योक्तबोधेनोक्तनिमित्तहीनस्य या पुनरनुत्पत्तिरुक्ता सा समासदैकरसा द्वैतशून्या च ॥ ७७ ॥

अनुत्पत्तिर्नामचित्ताख्य बोधस्यान्याकारेणास्फुरणं निर्विषयासं विदिति यावत् एवं च सैवमुक्तिः प्राप्यं ब्रह्मचेत्याशयेनाह बुद्ध्वेति—

बुद्ध्वा ऽनिमित्ततां सत्यां हेतुं पृथगनाप्नुवन्। वीतशोकं तथाऽकाममभयं पदमश्नुते ॥ ७८ ॥

जन्मादेर्हेतुं द्वैतं संविदः पृथगजानन्नत एवानिमित्तता संविदो द्वैतशून्यतैव सत्येति ज्ञात्वा शोककामभयहीनं पदं निर्विषय संविद्रूपं ब्रह्म भवति ॥ ७८ ॥

तत्पदं वस्तुतः प्राप्तमेवाविद्यया ऽप्राप्तमिवातो यत्नेन तत्प्राप्तिरुक्तेति सूचयत्यभूतेति—

अभूताभिनिवेशाद्धि सदृशे तत्प्रवर्तते। वस्त्वभावं सबुद्ध्वैव निस्सङ्गं विनिवर्तते॥७९॥

अभूते द्वैतेऽभिनिवेशो भूतत्वनिश्चयो ऽयथार्थज्ञानमविद्ययातः सदृशेऽयथार्थे द्वै-

ते तच्चित्तं सदा प्रवर्तते द्वैताभावबोधानन्तरं तु सोऽभिनिवेशश्चित्तं चासङ्गं सन्निवर्तते द्वैतं न विषयीकरोति ॥ ७९ ॥

ततः किं तदाह निवृत्तस्येति—

**निवृत्तस्याप्रवृत्तस्य निश्चला हि तदा स्थितिः। विषयः स हि बुद्धानां तत्साम्यमजमद्वयम् ॥ ८० ॥**

द्वैतान्निवृत्तस्याभावबुद्ध्या क्वापि पुनरप्रवृत्तस्य चित्तस्य या निश्चला स्थितिः सैव तत्साम्यं ब्रह्मभावस्तत्त्वज्ञानिनां विषयो लभ्यश्च तत्पदप्राप्तिरिति यावत् ॥ ८० ॥

कथंचित्तस्थितिर्बुद्धानां विषय इति वर्णयत्यजमिति—

**अजमनिद्रमस्वप्नं प्रभातं भवति स्वयम्। सकृद्विभा-**

तोह्येवैष धर्मो धातुस्वभाव-
तः ॥ ८१ ॥

चित्ताचलत्वे कृतऽविद्याऽऽवृतिनिद्रात्-त्कृतद्वैतस्वप्नरहितं प्रभातं प्रकाशो भवति परंत्वजं न केनचित्कृतं किन्तु स्वयम् न चायमात्मोदयः कदाचिदस्तं यातीत्याह सकृदिति, एष ह्यात्माधर्मो वस्तुस्वभावात्सकृदेव विभातो भवति ॥ ८१ ॥

प्रभातात्पूर्वं तु स्थितोप्येषधर्मो ऽविद्ययान्यथा भाति सदेत्याह सुखमिति—

सुखमाव्रियते नित्यं दुःखं
विव्रियते सदा । यस्य क-
स्य च धर्मस्य ग्रहेण भगवान-
सौ ॥ ८२ ॥

अविद्ययाद्वैतस्य ग्रहेण वासनया सुखरूपो ऽसौ भगवानात्मा न भाति कदाचिद्वा-

ति च सदा दुःखरूपः पूर्वम् ॥ ८२ ॥

द्वैतग्रहो न मूर्खाणामेव किन्तु शास्त्रिणा-
मपीत्याहास्तीति—

**अस्ति नास्त्यस्ति नास्तीति नास्ति नास्तीति वा पुनः । चलस्थिरोभयाभावैरावृणो-त्येव वालिशः ॥ ८३ ॥**

कश्चिद्वालिशो ऽविवेकी शास्त्रज्ञो देहे स्त्यात्मेति चलं विकारिणमात्मानं निरूपय-न्नपि यथाभूतमात्मानमावृणोति नैव जा-नाति । कश्चिन्नास्तीति स्थिररूपम् कश्चि-दस्ति नास्तीत्युभयरूपम् कश्चित्तु नास्ति नास्तीत्यभावं वीप्सया सर्वथा शून्यरू-पम् ॥ ८३ ॥

कस्तर्हि पण्डितोत आह कोट्य इति ।

**कोट्यश्चतस्र एतास्तु ग्रहै-**

यासां सदा वृतः । भगवानाभिरस्पृष्टो येन दृष्टः स सर्वदृक् ॥ ८४ ॥

यासामस्त्यादिकोटीनां ग्रहेणावृतस्ताभिरात्मा न कदाचित्स्पृष्टोस्तीतीदृश आत्मा येन बुद्धः स सर्वज्ञः पण्डितः ॥ ८४ ॥

ततः किमित्याह प्राप्येति—

प्राप्य सर्वज्ञतां कृत्स्नां ब्राह्मण्यं पदमद्वयम् । अनापन्नादि मध्यान्तं किमतः परमीहते ॥ ८५ ॥

अप्राप्तजनिस्थितिलयाद्वैतब्रह्मपदात्मकसर्वज्ञत्वलाभानन्तरं किमीहते चेष्टते न किञ्चित्कृतकृत्यो भवतीति भावः ॥ ८५ ॥

विप्राणान्त्वात्मन्यवस्थानमेवावश्यकमित्याह विप्राणामिति—

विप्राणां विनयो ह्येष शम-प्राकृत उच्यते । दमः प्रकृति दान्तत्वादेवं विद्वान्शमं व्रजे-त् ॥ ८६ ॥

प्रकृत्यैव शान्तादान्ताविनीताश्च भव-न्तीति हि यतो विप्राणां विनयो दमश्शम-श्च प्राकृतस्स्वाभाविक उच्यते शास्त्रेऽत ए-वमुक्तप्रकारेणात्मानं विद्वान्विप्रः शमं स्व-रूपावस्थानं व्रजेत्कुर्यात् ॥ ८६ ॥

अथ प्रकारान्तरेणात्मतत्त्वावधारणायाह सवस्त्विति—

सवस्तु सोपलम्भं च द्वयं लौकिकमिष्यते । अवस्तुसो-पलम्भं च शुद्धं लौकिकमि-ष्यते ॥ ८७ ॥

सवस्तु विद्यमानपदार्थकं सोपलम्भं सबोधं बुध्यमानं द्वैतं जागरितम् । अविद्यमानपदार्थकं बुध्यमानं शुद्धं जागरितेनामिश्रं द्वैतं स्वप्नः । लोकप्रसिद्धेश्चोभयं लौकिकम् ॥ ८७ ॥

अलौकिकं सुषुप्तमाहावस्त्विति—

**अवस्त्वनुपलम्भं च लोकोत्तरमिति स्मृतम् । ज्ञानं ज्ञेयं च विज्ञेयं सदा बुद्धैः प्रकीर्तितम् ॥ ८८ ॥**

लोकोत्तरमलौकिकं सुषुप्तम् । अवस्थात्रयं च ज्ञानज्ञेयरूपमिति विज्ञेयमित्युक्तमात्मज्ञैः ॥ ८८ ॥

अनन्तरपद्ये यदर्थमुक्तं तदाह ज्ञाने चेति—

**ज्ञाने च त्रिविधे ज्ञेये क्रमेण विदिते स्वयम् । सर्वज्ञ-**

ता हि सर्वत्र भवतीह महा-
धियः ॥ ८९ ॥

महाधियो ब्रह्मपदं जिज्ञासोर्महात्मनः लौकिकशुद्धलौकिकलोकोत्तरभेदेन त्रिविधे ज्ञाने ज्ञेये च क्रमेण विदिते परिशेषात्स्वयं स्वयं प्रकाशत्वेन सर्वत्र सदा सर्वज्ञतात्मज्ञता भवति ॥ ८९ ॥

एवमात्मज्ञानोपायतयोक्तमप्यात्मातिरिक्तं
न सत्यमित्याह हेयेति—

हेयज्ञेयाप्यपाक्यानि वि-
ज्ञेयान्यग्रयाणतः । तेषाम-
न्यत्र विज्ञेयादुपलम्भस्त्रिषु-
स्मृतः ॥ ९० ॥

हेयं लौकिकादित्रयम्। ज्ञेयं चिदात्मतत्त्वम्। आप्यं साधनम्। पाक्यं पक्तव्यं रागद्वेषादि। एतान्यग्रयाणतः प्रथमतो ज्ञात-

ऽयानि परन्तु तेषां मध्ये ज्ञेयादन्येषु त्रिषूपलम्भः स्मृत उपलम्भमात्रत्वमुक्तम् न तेषामन्यपदार्थत्वमिति भावः ॥ ९० ॥

त्रिषूपलम्भ इत्युक्त्या फलितमाह प्रकृत्येति—

**प्रकृत्याकाशवज्ज्ञेयाः सर्वे धर्मा अनादयः । विद्यते न हि नानात्वं तेषां क्वचन किंचन ॥ ९१ ॥**

तस्माद्धर्माः प्रतीताश्चिदन्यपदार्थाः प्रकृत्यास्वभावेनानादयो ऽजाआकाशवत्सर्वगानिर्लेपाश्चिद्रूपा इति यावत् तेषां चिद्रूपाणां तु नानात्वं घटाद्याकाशानामिव कल्पितमिति भावः ॥ ९१ ॥

किं ततस्तदाहादिबुद्धा इति—

**आदिबुद्धाः प्रकृत्यैव सर्वे धर्माः सुनिश्चिताः । यस्यैवं**

भवति क्षान्तिः सोमृतत्वाय कल्पते ॥ ९२ ॥

आदिबुद्धाः सदाह्यात्मस्वरूपा एव सर्वेर्था एवं यस्य क्षान्तिनिश्चयः समुच्यते ॥ ९२ ॥

तदाऽमृतत्वोक्तिरज्ञदृष्ट्या वस्तुतस्तु मुक्त एव सदत्याह्यादिशान्ता इति—

आदिशान्ता ह्यनुत्पन्नाः प्रकृत्यैव सुनिर्वृताः। सर्वे धर्माः समाभिन्नाः अजं साम्यं विशारदम् ॥ ९३ ॥

हि यतः सर्वे धर्माः आदिशान्ताः सदा मुक्ता अजाः स्वभावेन सुखरूपाः समाः सदैकरसा अभिन्नाश्चातोऽजं सदैकरसं शुद्धमेवात्मस्वरूपम् ॥ ९३ ॥

यथावदात्मज्ञस्तुतयतदज्ञं निन्दाति

वैशारद्यमिति—

वैशारद्यं तु वै नास्ति भेदे विचरतां सदा। भेदनिम्नाः पृथग्वादास्तस्मात्ते कृपणाः स्मृताः॥ ९४॥

पृथग्वादा भेदवादिनो भेदनिम्ना भेदगर्तगा ये तेषां सदाभेदे विचरतां वैशारद्यं शुद्धचिदात्मत्वं नास्ति तस्मात्ते दीनाः क्षुद्रावा॥ ९४॥

स्तौति विद्वांसमज इति—

अजे साम्ये तु ये केचिद्भविष्यन्ति सुनिश्चिताः। ते हि लोके महाज्ञानास्तच्चलोको न गाहते॥ ९५॥

केचिद्वर्णाश्रमिणः किंयच्छब्दयोर्लिङ्गम-

विवक्षितम्। महाज्ञाना उत्कृष्टज्ञानिनः। तज्ज्ञानं लोकोजनस्साधारणो न लभते॥९५॥

उत्कृष्टत्वं च सर्वथा निर्विषयत्वमेव ज्ञानस्येत्याहाजेष्विति—

**अजेष्वजमसंक्रान्तं धर्मेषु ज्ञानमिष्यते। यतो न क्रमते ज्ञानमसङ्गं तेन कीर्तितम्॥ ९६॥**

वस्तुतस्त्वजेषु घटादिपदार्थेषु संबन्धहीनं ज्ञानमप्यजमेव वस्तुतः असंबद्धत्वादेवं चासङ्गं निर्विशेषं ब्रह्मरूपमुक्तम्। निर्विषत्वमेव ज्ञाने महत्त्वमिति भावः॥९६॥

नान्यमते तः कैवल्यमित्याहाण्विति—

**अणुमात्रेऽपि वैधर्म्ये जायमाने ऽविपश्चितः। असङ्गता**

सदा नास्ति किमुतावरणच्युतिः ॥ ९७ ॥

किञ्चिदप्युत्पद्यमाने वैधर्म्ये ऽनात्मवस्तुनि स्वीकृते ऽविपश्चितो ऽविदुषो वादिनः कदाचिदुक्तासङ्गता न स्यादित्यज्ञानहानिरतिदुर्लभा ॥ ९७ ॥

ननु द्वैतिनो न मोक्ष इति वदतस्तवैव द्वैतित्वेनामुक्तत्वं प्रसज्येतात आह लब्धेति—

अलब्धावरणाः सर्वे धर्माः प्रकृतिनिर्मलाः । आदौ बुद्धास्तथामुक्ता बुध्यन्त इति नायकाः ॥ ९८ ॥

चिज्ज्योतिर्मात्रत्वेन स्वभावादेव तमोरूपावरणविक्षेपद्वैतमलयोरभावेनादौ पूर्वमेव बुद्धाः स्वयं प्रकाशत्वेनात्मज्ञा मुक्ताश्च सन्तः पुनर्बुध्यन्त इव मुच्यन्त इव च भ-

वन्ति सर्वेजीवा इति नायकावेदान्ताचार्या वदन्तीति शेषः तथाच न कोपि दोषप्रसङ्ग इति भावः ॥ ९८ ॥

विज्ञानवादेन सौगतमताङ्गीकारशङ्कामाभूदित्यखण्डाद्वैतचित्तत्वमाह क्रमत इति—

**क्रमते नहि बुद्धस्य ज्ञानं धर्मेषु तापिनः। सर्वे धर्मा स्तथा ज्ञानं नैतद्बुद्धेन भाषितम् ॥ ९९ ॥**

बुद्धस्यात्मविदो ज्ञानं नान्यवस्तुषु गच्छति यतः सतापी असदहिभयेन धावन्नति वेपमानो रज्जुवोधानन्तरं यथा तथानुतापी तस्मात्सर्वेधर्माः पदार्थास्तथा आत्मविदात्मभूताः अखण्डाद्वयबोधमात्रं तत्त्वमिति भावः बुद्धेन सुगतेन तु नेदृशं ज्ञानमुक्तमङ्गीकृतम् ॥ ९९ ॥

ग्रन्थसमाप्तिं नत्या सूचयति दुर्दर्शमिति–

दुर्दर्शमातिगम्भीरमजं साम्यं विशारदम्। बुद्ध्वापदमनानात्वं नमस्कुर्मो यथाबलम्॥ १००॥

गम्भीरं सर्वान्तरं दुर्ज्ञेयमज्ञेनाजंसदैकरसं शुद्धमद्वयं पदं लक्ष्यमात्मानं बुद्ध्वा यथाशक्ति यावज्जीवं नुमश्शास्त्राचार्योपदेष्टृन्नकृतघ्नो भवामीति भावः॥ १००॥

दययाऽनन्तरामस्य मृदुर्ग्रन्थोऽयमुम्भितः।
श्रीस्वामिभास्करानन्दैः काश्यामानन्दकानने॥१॥
गम्भीरपातभीतानां गौरवग्रस्तचेतसाम्॥
मुदे भवतु माण्डूक्यकारिणां प्रकाशकः॥ २॥

इति श्रीमत्कारिकाप्रकाशः॥०॥

श्रीगणेशाय नमः ॥

अथर्ग्वेदे द्वितीयारण्यके तुर्यादिभिस्त्रिभिरध्यायैर्ब्रह्मात्मविद्याप्रकाशिता। तत्राद्ये त्रयः खण्डाः। तदग्रिमाध्यायौ तुर्यपञ्चमखण्डौ । तथाच पञ्च खण्डात्मकैतरेयोपनिषदावात्मनि ब्रह्मत्वावगतेः सौकर्य्यार्थाध्यारोपभूमिकामारचयत्यात्मावाइदमित्यादिना ।

अत्रादावन्ते च वाङ्मेमनसि प्रतिष्ठितेति सप्तमाध्यायषष्ठखण्डात्मिका शान्तिः पठनीया ॥

**आत्मावाइदमेकएवाग्रआसीन्नान्यत्किंचनामिषत् । स ईक्षत लोकान्नु सृजा इति॥ १॥**

इदं जगदग्रे सृष्टेः पुरा आत्मा वै आत्मैवासीदिति विजातीयानात्मभेदानिषेधः । एकएवासीदिति स्वगतावयव भेद निषेधः ।

मिषद्व्यापारवच्चैतन्यमन्यत्किंचिन्नासीदिति सजातीय भेदनिषेधः । ततः नु वितर्के अहं लोकान्सृजै स्रक्ष्यामीति सपरमात्मैक्षत विचारितवान् । इदमत्रावधेयम् । सदाऽद्वैतात्मत्वप्यासीदित्याद्युक्तिरजबोधनायाज्ञदृष्ट्यैवेति ॥ १ ॥

ईक्षणोत्तरं यत्कृतं तदाह स इति—

**स इमाँल्लोकानसृजताम्भो मरीचीर्मरमापोऽदोऽम्भः परेणादिवन्द्यौः प्रतिष्ठान्तरिक्षं मरीचयः । पृथिवी मरोया अधस्तात्ता आपः॥२॥**

स आत्मा इमानम्भः प्रभृति लोकानसृजत । तत्र दिवं परेणादिवः परे ये महरादयो लोकास्तेषां प्रतिष्ठाश्रयो द्यौः स्वर्लोकश्चादोम्भोसावम्भः संज्ञको लोकोन्त-

ष्ट्यर्थाम्भसामाश्रयत्वात् । सूर्यमरीच्याश्रयत्वाच्चान्तरिक्षं मरीचिलोकः म्रियन्तेऽत्रेति मरो भूलोकः अथ पृथिव्या अधस्ताद्या भूमयो तलाद्याः सप्त ताः केवलभोगार्थिभिराप्यन्त इत्याप इत्युच्यन्ते । विवर्ताभिप्रायेण स्वप्नवत्क्रमं विना लोक सृष्टिरेवोक्ता । तथापि ग्रन्थान्तराविरोधाय पञ्चभूतोत्पत्त्यादि पूर्विकैव सा ज्ञेया ॥ २ ॥

अग्न्यादि लोकपालसृष्ट्यर्थमाह मन्त्रद्वयं स इति—

**स ईक्षते मेनु लोका लोकपालान्नु सृजा इति । सोऽद्भ्य एव पुरुषं समुद्धृत्या मूर्छयत् ॥ ३ ॥**

इमे चत्वारो लोकाः सृष्टा अथ लोकपालान्स्रक्ष्यामीति स ईक्षत ततोऽद्भ्य उपलक्षणत्वात्पञ्चभूतेभ्यः समुद्धृत्य किंचिदुपा-

दाय पुरुषममूर्छयत्पुरुषाकारं पिण्डमकरोत्संघट्टनेन ॥ ३ ॥

तमभ्यतपत्तस्याभि तप्तस्य मुखं निरभिद्यत यथाण्डम् मुखाद्वाग्वाचोऽग्निर्नासिके निरभिद्येतां नासिकाभ्यां प्राणः प्राणाद्वायुरक्षिणी निरभिद्येतामक्षीभ्यां चक्षुश्चक्षुष आदित्यः कर्णौ निरभिद्येतां कर्णाभ्यां श्रोत्रं श्रोत्राद्दिशस्त्वङ्निरभिद्यत त्वचो लोमानि लोमभ्य ओषधिवनस्पतयो हृदयं निरभिद्यत हृदयान्मनो मनसश्चन्द्रमा नाभिर्निरभिद्यत ना-

भ्या अपानोपानान्मृत्युः शिश्नं निरभिद्यत शिश्नाद्रेतो रेतस आपः ॥ ४ ॥

अथ तं विराडाख्यपुरुषपिण्डमीश्वरोऽभ्यतपदिन्द्रियदेवता मुखाद्याकारविशिष्टमभावयत् ततोऽभितप्तस्य तथा भावितस्य तस्य पिण्डस्य मुखच्छिद्रं पक्ष्यण्डवद्विदीर्णमभवत् ततो वागिन्द्रियमग्निर्देवता च ततः । न मुखादेरिन्द्रियदेवतोत्पत्तिः किन्तु प्रसिद्धस्वस्वकारणादेवेति दिक् ॥ ४ ॥

॥ इति प्रथमःखण्ड ॥

अथ क्षुत्पिपासासृष्टिमग्न्यादीनां पृथक् पृथक् स्थूलदेह सृष्टिभूमिकां चाह ता इति—

ता एता देवताः सृष्टा अस्मिन्महत्यर्णवे प्रापतँस्तमशना पिपासाभ्यामन्ववार्जत् ।

ता एनमब्रुवन्नायतनं नः प्रजानीहि यस्मिन्प्रतिष्ठिता अन्नमदामेति ॥ १ ॥

यदा देवा अर्णवे विराडाख्यशरीरे ऽपतन्प्रतिष्ठितास्तदा तं विराजमीशः क्षुत्पिपासायुतमकरोत् ततस्ता देवता ईश्वरमब्रुवन् यत्र गावयं स्वातन्त्र्येण भक्ष्यं भक्षयामः तच्छिन्नं भिन्नमायतनं देहमस्मभ्यं कुर्विति ॥१॥

नानाजीवदेहसृष्टिमाह द्वाभ्याम्—

ताभ्यो गामानयत्ता अब्रुवन्न वै नोयमलमिति । ताभ्योश्वमानयत्ता अब्रुवन्न वै नोयमलमिति ॥ २ ॥

ईशस्ताभ्यो गोदेहं विधायार्पयत्ता ऊचुर्नायं देहोस्माकमलं सर्वकार्यक्षममित्येवमश्वेपि ॥ २ ॥

ताभ्यः पुरुषमानयत्ता अब्रुवन्सुकृतं वतेति पुरुषो वाव सु कृतम् । ता अब्रवीद्यथायतनं प्रविशतेति ॥ ३ ॥

यतः पुरुष एव सुकृतं पुण्यं तद्धेतुत्वादतो वतेति हर्षे सुष्ठुकृतमिदं त्वया शरीरमित्युक्त ईशोत्र देहे स्वस्वस्थानस्था भवत यूयमित्यब्रवीत् ता देवताः ॥ ३ ॥

प्रवेशं दर्शयत्यग्निरिति—

अग्निर्वाग्भूत्वा मुखं प्राविशद्वायुः प्राणोभूत्वा नासिके प्राविशदादित्यश्चक्षुर्भूत्वाक्षिणी प्राविशद्दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्नोषधिवनस्पत-

यो लोमानि भूत्वा त्वचं प्राविशश्चँन्द्रमा मनोभूत्वा हृदयं प्राविशन्मृत्युरपानो भूत्वा नाभिं प्राविशदापोरेतो भूत्वा शिश्नं प्राविशन् ॥ ४ ॥

गोलकेषु देवानामनुपलम्भाद्वाग्भूत्वावाग्रूपेणाग्निर्मुखमविशदित्येवमग्रेपि ज्ञेयो ऽत्रार्थः ॥ ४ ॥

तत्तद्देहेषु क्षुत्पिपासास्थितय आहतमिति—

तमशना पिपासे अब्रूतामावाभ्यामभि प्रजानीहीति ते अब्रवीदेतास्वेववां देवतास्वाभजाम्यतासुभागिन्यौ करोमीति । तस्माद्यस्यै कस्यै च

देवतायै हविर्गृह्यते भागिन्या वेवास्यामशना पिपासे भवतः ॥ ५ ॥

ततस्तमीशम् । अभिप्रजानीह्यायतनं कुरु । ततो देवता स्वेववामाभजामि भागिन्यौ करोमीत्यब्रवीत्ते प्रतीशः नवां पृथगायतनं भोगाय तस्मादस्यां देवतायामेव भागिन्यौ भवत इति भावः ॥ ५ ॥

इति द्वितीयखण्डः ॥

भोगायतनानन्तरं भोग्यसृष्टय आह स इति—

स ईक्षते मेनुलोकाश्च लोकपालाश्चान्नमेभ्यः सृजा इति ॥ १ ॥

लोकालोकपालाश्चक्षुरादि युक्ताः कृताः इत्येभ्यो लोकपालार्थमन्नं सृजै ॥ १ ॥

अन्नसृष्टिमाह स इति ।

सोऽपोऽभ्यतपत्ताभ्योऽभितप्ताभ्यो मूर्तिरजायत । या वै सा मूर्तिरजायतान्नं वै तत् ॥ २ ॥

स ईशोऽपः पञ्चभूतान्यन्नत्वेनाभावयद्भाविताभ्यो मूर्तिः कठिनरूपमभवद्याच मूर्तिस्तदेवान्न मदनीयं व्रीह्यादि मार्जारादीनां मूषकादि च ॥ २ ॥

अदनं च वाह्यान्नस्यगलाधोनयनं तृप्तये
तत्रापान एव शक्तो न वागादिकमित्या-
हाष्टभिस्तदेनदिति—

तदेनत्सृष्टं पराङत्यजिघांसत्तद्वाचाजिघृक्षत्तन्नाशक्नोद्वाचा ग्रहीतुम् । स यद्धैनद्वाचाऽग्रहैष्यदभिव्याहृत्य हैवान्नमत्रप्स्यत् ॥ ३ ॥

सृष्टं तदेनदन्नं चरमचरं वा पराङ्वहिरेव स्थितम् । चरन्त्वत्यजिघांसद्धयेनातिशयेन हन्तुं गन्तुं पलायितुमैच्छत् यथा मार्जारादेः पुरतो मूषकादिः सृष्टिरनाद्येत्यतीतत्वेन निर्देशः अथ स भोक्तावाचा तदन्नं ग्रहीतुमैच्छत्परंतु नाशक्नोद्वाचा ऽऽक्रष्टुम् यद्यद्य ऽग्रहीष्यत्तर्ह्यन्नमभिव्याहृत्यैव तत्तदन्नशब्दमुक्त्वैव तृप्तोऽभविष्यत् एवमग्रेप्यूह्यम् ॥ ३ ॥

तत्प्राणेनाजिघृक्षत्तन्नाशक्नोत्प्राणेन ग्रहीतुम् । स यद्धैनत्प्राणेनाग्रहैष्यदभिप्राण्य हैवान्नमत्रप्स्यत् ॥ ४ ॥ तच्चक्षुषाजिघृक्षत्तन्नाशक्नोच्चक्षुषा ग्रहीतुम् । स यद्धैनच्चक्षुषा ग्रहैष्य-

दृष्ट्वा हैवान्नमत्रप्स्यत् ॥५॥
तच्छ्रोत्रेणाजिघृक्षत्तन्नाशक्नो-
च्छ्रोत्रेण ग्रहीतुम् । सयद्धैन-
च्छ्रोत्रेणाग्रहैष्यच्छ्रुत्वा हैवा-
न्नमत्रप्स्यत् ॥ ६ ॥ तत्त्वचा-
जिघृक्षत्तन्नाशक्नोत्त्वचाग्रही-
तुम्।सयद्धैनत्त्वचाग्रहैष्यत्स्पृ-
ष्ट्वा हैवान्नमत्रप्स्यत् ॥ ७ ॥
तन्मनसाजिघृक्षत्तन्नाशक्-
नोन्मनसा ग्रहीतुम् । स यद्धै-
नन्मनसा ग्रहैष्यद्ध्यात्वा है-
वान्नमत्रप्स्यत् ॥ ८ ॥ तच्छि-

श्नेनाजिघृक्षत्तन्नाशक्नोच्छि-
श्नेन ग्रहीतुम् । स यद्धैनच्छिश्ने
नाग्रहैष्यद्विसृज्य हैवान्नम-
त्रप्स्यत् ॥ ९ ॥

प्राणेन घ्राणेन । अभिप्राण्य घ्रात्वा । अथ तदेनदन्नं ग्रहीतुमाकष्टुम् । स भोक्ता यद्यदीत्यर्थस्तु सर्वत्र समानः ॥४॥५॥६॥ ॥७॥८॥९॥

अथान्नग्रहणे समर्थमाह तदिति—

तदपानेनाजिघृक्षत्तदावय-
त् । सैषोन्नस्य ग्रहो यद्वायुर-
न्नायुर्वा एष यद्वायुः ॥ १० ॥

तदन्नमावयदाकृष्टवान् तथाच यद्वायुर्योयमपानवायुः स एषोन्नस्य ग्राहकस्त- स्मादेष यद्वायुर्यो वायुः सोन्नायुरन्नद्वारा

भोक्तुरायुरायुर्हेतुर्वै प्रसिद्धः ॥ १० ॥

अथ भोक्तारं दर्शयितुमीशविचारमाह स इति ।

स ईक्षत कथं न्विदं मदृते स्यादिति स ईक्षतकतरेणप्रपद्याइति । स ईक्षत यदिवाचाभिव्याहृतं यदि प्राणेनाभिप्राणितं यदि चक्षुषा दृष्टं यदि श्रोत्रेण श्रुतं यदि त्वचास्पृष्टं यदि मनसाध्यातं यद्यपानेनाभ्यपानितं यदि शिश्नेन विसृष्टमथ कोहमिति ॥ ११ ॥

अथेदमायतनादि सृष्टं मदृते ऽध्यक्षं मां विना कथं व्यवस्थितं स्यात् किंच यदि

वागादिभिः स्वातन्त्र्येणोक्त्यादि क्रियेताथाहं कः अहं तु न कोपि भवेयं मां तु न कोपि जानीयादिति यावत् अतो त्रायतने सर्वाध्यक्षत्वाय पादाग्रब्रह्मरन्ध्रयोर्मध्ये कतरेण मार्गेणाहं प्रपद्यै प्रवेशं कुर्यामितीक्षत स ईशः ॥ ११ ॥

प्रवेशमाह स इति—

**स एवमेव सीमानं विदार्यैतया द्वारा प्रापद्यत सैषा विदृतिर्नामद्वास्तदेतन्नान्दनम् । तस्य त्रय आवसथास्त्रयः स्वप्ना अयमावसथो यमावसथो यमावसथ इति ॥ १२ ॥**

सीमानं त्रिकपालसन्धिंविदार्याविशदित्यस्य द्वारस्य विदृतिर्नाम अनेन च प्राप्य

ब्रह्मनन्दतीति नन्दनमेवनानन्दामिति च नाम अथ तस्येशस्य प्रविष्टत्वेन जीवाख्यस्याद्य आवसथः स्थानं दक्षिणाक्षि द्वितीयो मनस्तृतीयो हृदयम् तेषु चास्य क्रमेण जाग्रदाद्यास्त्रयः स्वप्ना अवस्थाः प्रतीयन्ते ॥ १२ ॥

अथैवमारोपितस्यापवादमाह स इति—

स जातो भूतान्यभि व्यैख्यत्किमिहान्यं वावदिषदिति । स एतमेव पुरुषं ब्रह्मततमम-पश्यदिदमदर्शमिती ३॥ १३॥

स जात उत्पन्नो मानवो विरलो भूतानि जगदभि सर्वतो विशेषेणैख्यद्विचारयति । इहात्मन्यन्यमन्यत्वेन प्रतीतपदार्थमहं किंवावदिषद्वदामि किन्तु न किंचिदनिर्वच-

नीयत्वात्सर्वस्येति । एवं चैतमेवात्मानंतत ममतिशयेन ततं पूर्णं ब्रह्मापश्यत्पश्यति इ-दमात्मस्वरूपमहमदर्शञ्ज्ञातवानिति इत्याकारेण प्रत्यक्षतयेति यावत् अत्रान्स्येति शब्दान्त्य ईकारो विचारणार्थं प्लुतः ॥१३॥

उक्ताकारापरोक्षवत्वादेवेशस्येदन्द्र इति ना-मेत्याह तस्मादिति—

तस्मादिदन्द्रो नामेदन्द्रोह वै नाम तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण । परोक्ष प्रिया इव हि देवाः परोक्षप्रिया इव हि देवाः ॥ १४ ॥

इदं दृष्टमिति निर्वचनेनेदन्द्रोनामेश्वरः इदन्द्रोनामेशोहवै प्रसिद्धो लोके तथापि पू-ज्यतमत्वान्नैतन्नाम साक्षाद्ग्रहणन्ति कि-न्त्विन्द्र इति अन्येपि देवाः पूज्या हि यतः

परोक्षप्रिया इव साक्षान्नाम ग्रहणेन न प्रायः प्रीणन्ति । तथ्यमेतदित्यावृत्तिः ॥१४॥

इत्यैतरेयोपनिषत्प्रसादे तृतीयखण्डः ॥०॥

प्रविश्यदेहं प्रायो मुह्यतीश इति नात्मदर्शी भवत्यतो वैराग्यायोपक्रमते पुरुषेहवाइति–

पुरुषेह वा अयमादितो गर्भो भवति यदेतद्रेतस्तदेतत्सर्वेभ्योऽङ्गेभ्यस्तेजःसंभूतमात्मन्येवात्मानं विभर्ति तद्यदा स्त्रियां सिञ्चत्यथैनज्जनयति तदस्य प्रथमं जन्म ॥ १ ॥

अयं जीव आदौ चन्द्रमण्डलाज्जलेनान्नेन पुरुषे रेतोरूपगर्भो भवति तदेतद्रेत आत्मनि देहे विभर्ति धत्ते कीदृशम् । सर्वाङ्गतेजस्संभूतत्वेनात्मानमात्मनोरूपान्तरम् । स्त्रियां यदा तद्रेतः सिञ्चति अथानन्तरमेत-

द्रेतो गर्भं स्वजठरतो जनयति जनकः त-
च्चाद्यं जन्म जीवस्य ॥ १ ॥

अथ मातुरुदरे स्थितिप्रकारमाह तदिति—

**तत्स्त्रिया आत्मभूयं गच्छ-
ति यथा स्वमङ्गं तथा । त-
स्मादेनां न हिनस्ति सास्यैत-
मात्मानमत्र गतं भावयति॥२॥**

यथान्यदङ्गं तथा तद्रेतोपि मातुरात्मभू-
यं देहभावं यात्यतो नैनां मातरं पीड़यति
प्रविष्टवाणादिवत् अथ सा मातास्य स्वभ-
र्तुरात्मानं स्वजठरगं ध्यायति पालयति वा
यत्नेन ॥२ ॥

पुंस्त्रीकृत्योक्तिपुरस्सरंद्वितीयजन्म दर्शयति
सेति—

**सा भावयित्री भावयितव्या
भवति तं स्त्री गर्भं विभर्ति सोग्र**

एव कुमारं जन्मनोग्रेऽधिभावयति। स यत्कुमारं जन्मनोग्रेऽधिभावयत्यात्मानमेव तद्भावयत्येषां लोकानां संतत्या एवं संतताहीमेलोकास्तदस्य द्वितीयं जन्म ॥ ३ ॥

सा गर्भं भावयत्यतः सापि भर्त्राभावयितव्या पालनीयास्ति प्रयत्नेन यावत्तं गर्भं विभर्ति अथ सपिताग्र एव पूर्वमेव जन्मतो गर्भ एव सिद्धं कुमारं जन्मनोग्रे जन्मानन्तरमधिभावयति संस्करोति यदेतदधिभावनं तदात्मन एव पितैव पुत्रात्मना जायते यतः अथैतत्पुत्रोत्पादनादि कर्म न मुक्त्यर्थं किन्तु लोकसंतत्यै हि यत एवं शिष्टव्यवहाराश्रयणेनैवेमेलोकाः संतता वृद्धिं गताः द्वितीयं तन्मातुरुदराज्जन्म ॥ ३ ॥

अवान्तरकृत्योक्तिपुरस्सरं तृतीयजन्म दर्शयति सोस्येति—

सोस्यायमात्मापुण्येभ्यः कर्मभ्यः प्रतिधीयते। अथास्यायमितर आत्मा कृतकृत्योवयोगतः प्रैति स इतः प्रयन्नेव पुनर्जायते तदस्य तृतीयं जन्म ॥ ४ ॥

सोयं पुत्ररूप आत्माऽस्य पितुः स्थानेप्रतिनिधिः क्रियते पित्राकर्तव्यस्य पुण्यकर्मणः करणाय ततोस्य पितुरात्मा तु कृताखिलकार्यो वयोगतो गतायुर्म्रियते परन्त्वितः प्रयन्नेव शरीरत्यागकाल एव वासनया गृह्णाति भावि शरीरम् ॥ ४ ॥

उक्तवक्ष्यमाणार्थे श्रुतिमवतारयति तदुक्तमिति—

तदुक्तमृषिणा । गर्भेनुसन्नन्वेषामवेदमहं देवानां जनिमानिविश्वा । शतंमापुरआयसीररक्षन्नधः श्येनो जवसानिरदीयमिति गर्भ एवै तच्छयानो वामदेव एवमुवाच ॥५॥

जन्मत्रयोक्तवन्धो वक्ष्यमाण मोक्षस्तदुभयमुक्तमृषिणा मन्त्रेण । तथाहि । नुवितर्के गर्भे ऽनुगर्भ एव सन्नहमेषामग्न्यादि देवानां विश्वासर्वाणि जन्मान्युक्तान्य वेदं तत्त्वज्ञानमहिम्ना । अधः पूर्वं तु तत्त्वज्ञानादायसीर्लोहमय्य इव दृढाः शतं पुरश्शरीराणि मा मामरक्षन्परमपदगमनाद्बन्धुरित्यर्थः तथापि श्येन इव शीघ्रं निरदीयमहं निर्गतो बन्धजालात् इति मन्त्रपूरणे । एवमेतदुवाच गर्भग एव बामदेवः ॥ ५ ॥

मुक्तिमाह वामदेवस्य स इति ।

स एवं विद्वानस्माच्छरीर-
भेदादूर्ध्वं उत्क्रम्यामुष्मिन्स्व-
र्गे लोके । सर्वान्कामानाप्त्वा-
ऽमृतः समभवत्समभवत् ॥ ६ ॥

गर्भ एव स वामदेव एवं ज्ञानवान्देह-
भेदापेक्षयोर्ध्वैमुष्मिन्निन्द्रियागोचरे स्वर्गे सु-
खस्वरूप लोके पदे उत्क्रम्य गत्वा क्षुद्रान-
न्दानां पूर्णानन्देन्तर्भावात्तत्रैव सर्वानन्दान-
वाप्यामृतो पुनरावृत्तिरभवत् कृतपूर्णसाध-
नस्यापि सूक्ष्मरागादिप्रतिबन्धे ज्ञानमाश्वे-
वोदेति देहान्तर इति वामदेवकथेति भावः
॥ ६ ॥ ॥ इति चतुर्थखण्डः ॥

अथ विरक्तानां मुमुक्षूणामात्मज्ञानाय
विचारमाह क इति ।

कोऽयमात्मेति वयमुपास्महे

कतरः स आत्मा येन वा पश्यति येन वा शृणोति येन वा गन्धानाजिघ्रति येन वा वाचं व्याकरोति येन वा स्वादुचास्वादु च विजानाति ॥ १ ॥

आत्मेत्यहमहमिति सदायमुपास्महे व्यवहरामः स क इति सामान्यतो जिज्ञासा ततः सोपाधिकनिरूपाधिकयोर्मध्ये कतरस्स इति विशेषः आद्येपि पश्यामीत्यादि प्रयोगाद्येन पश्यति तदादिषु क इति विशेषः॥ १॥

अथ देहेन्द्रियाद्युपाधित्वेन प्रसिद्धमिति न तत्र युक्त आत्मसंशय इत्यन्तःकरण वृत्तिषु संशयायाह यदेतदिति ॥

यदेतद्धृदयं मनश्चैतत् संज्ञानमाज्ञानं विज्ञानं प्रज्ञानं

मेधादृष्टिर्धृतिर्मतिर्मनीषा जूतिः स्मृतिः संकल्पः क्रतुरसुः कामोवश इति। सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति ॥ २ ॥

हृदयं बुद्धिर्मनश्चैकंवस्तु तद्वृत्तयश्च संज्ञानादयो सङ्ख्याः तत्र संज्ञानं चेतनताहमित्यादि स्वबोधः । आज्ञानमाज्ञापनमीश्वरता विज्ञान सर्वकलाज्ञानम् । प्रज्ञानं शुद्धाचित् अयमेववृत्तिषु प्रतिफलतीति वृत्तिषूल्लेखोस्य । मेधाश्रुतार्थधारणशक्तिः। दृष्टिरिन्द्रियैर्ज्ञानम् । धृतिर्धैर्यम्। मतिर्मननम् । मतौस्वातन्त्र्यं मनीषा । जूतीरोगाद्यैर्दुःखिता। क्रतुर्निश्चयः। कामस्तृष्णा ।वशः स्त्रीस्पर्शाद्यभिलाषः इत्यादिषु चिदिवाऽऽभासमानेष्वात्मा क इत्यर्थः अथैकदेहे-

नेकात्मनाम प्रसिद्धेरयुक्तत्वाच्चैकात्मनि- श्रयायाह सर्वाणीति तत्तद्वृत्त्यभिव्यक्तत्वेन प्रज्ञानस्यैवैतानि नामानि तथाच नित्यम- जं प्रज्ञानमेवात्मेति भावः ॥ २ ॥

योऽयमात्मा निरुपाधिः स सर्वाधिष्ठानत्वा-
त्सर्वात्मा परंब्रह्मेत्याहैष इति ।

एष ब्रह्मैष इन्द्र एष प्रजापतिरेते सर्वे देवा इमानि च पञ्चमहाभू- तानि पृथिवीवायुराकाशआपो ज्योतींषीत्येतानीमानि च क्षु- द्रमिश्राणीव वीजानीतराणि चेतराणि चाण्डजानि च जा- रुजानि च स्वेदजानि चोद्भि- ज्जानि चाश्वा गावः पुरुषा ह- स्तिनो यत्किञ्चेदं प्राणि जङ्गमं

**च पतत्रि च यच्च स्थावरम् सर्वं तत्प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितं प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म ॥ ३ ॥**

ब्रह्माहिरण्यगर्भः। प्रजापतिर्विराट् । देवा अग्न्यादयः । क्षुद्रामिश्राणिमसकादिक्षुद्र-जन्तुसहितानीतराणीतराणि परस्परं भिन्ना नि स्थावरजङ्गमभेदेन द्विविधानीमानि बीजा-नीव स्वस्वकार्यं प्रतिकारणानीव मुख्यकार-णत्वाभावात्। द्विविधबीजान्येव दर्शयत्यण्ड-जादि हस्त्यन्तेन । जारुजानि जरायुजानि। पतत्र्याकाशे पतनशीलं पक्ष्यादिजङ्गमभेदः। अयमर्थः। ब्रह्मादि हस्त्यन्तमेष प्रज्ञानाख्य आत्मैवात्मैवैषां कारणमितिभावः पुनः यत् किंचेदं स्थावरजङ्गमं प्राणि तत्सर्वं प्रज्ञानेत्रं नीयते स्थाप्यते नेनेति नेत्रम् प्रज्ञानमेव ने-

॥ श्रीगणेशाय नमः ॥

अथ निजांशीभूतजीवान्परमार्थस्वरूपबोधनेन शिवान्सम्पादयन् परमात्मा कृष्णयजुर्वेदीयतैत्तिरीयशाखोपनिषदमारभमाणः 'श्रेयांसि बहुविघ्नानीति' प्रसिद्धेर्ब्रह्मज्ञाने परमश्रेयस्त्वेनातीवविघ्नसम्भवात् प्रथमया शिक्षाख्यवल्ल्या ऽखिलविघ्नप्रशमनोपायान्तःकरणशुद्धये पुण्यजनकाध्ययनादि सम्बन्ध्यनेकशिक्षाः प्रदर्शयन्नादौ विघ्नशमनसमर्थशान्तिमन्त्रं मुमुक्षुजनेनापि वेदपाठे पठनीयमाह शन्न इति ।

**शन्नो मित्रः शं वरुणः शं नो भवत्वर्यमा शंन इन्द्रो बृहस्पतिः शं नो विष्णुरुरुक्रमः नमो ब्रह्मणे नमस्ते वायो त्वमेव प्रत्यक्षं ब्रह्मासि त्वामेव प्रत्यक्षं**

**ब्रह्म वदिष्यामि ऋतं वदिष्यामि सत्यं वदिष्यामि तन्मामवतु तद्वक्तारमवतु अवतु माम् अवतु वक्तारम् ॐ शान्तिः शान्तिः शान्तिः ॥ १ ॥**

दिनरात्रिचक्षुर्बलवाणीचरणदेवताः क्रमेण मित्रादयो महत्पराक्रमविष्णवन्ता नोऽस्माकं शं सुखं सुखहेतवो भवन्तु न विना सुखं श्रवणादिज्ञानसाधनं स्यादित्येवमग्रेप्यूह्यम्। हे वायो ते नमः ब्रह्मणे परब्रह्मरूपाय च सर्वक्रियाहेतुत्वात्ते नमः परब्रह्मपरोक्षं त्वं तु प्रत्यक्षमिति त्वामेव ब्रह्म ऋतं सत्यं सत्यं परमार्थसद्रूपं च वदिष्यामीति स्तुतिः तद्वाय्वात्मब्रह्म मां विद्यार्थिनं वक्तारमाचार्यं चावत्विति द्विःप्रार्थनादरेण । त्रिः

शान्त्युक्तिरध्यात्मादित्रिविधविघ्नप्रशान्तये ॥

इति तैत्तिरीयोपनिषत्प्रसादे प्रथमवल्ल्यां प्रथमोनुवाकः ॥

अथ स्वरवर्णादिच्युतो वेदपाठोनर्थायेत्याह शीक्षामिति—

ॐ शीक्षांव्याख्यास्यामः वर्णः स्वरः मात्राबलम् साम सन्तानः इत्युक्तः शीक्षाध्यायः ॥ १ ॥

शिक्ष्यते गुरुभिरुच्चारणे या संहतिर्वर्णादीनां सा ताम् । अकारादिर्वर्णः स्वरउदात्तादिः मात्राहूस्वाद्या बलंप्रयत्नः अद्रुतविलम्बितोच्चारणं साम सन्तानः परः संनिकर्षः एते च सम्प्रदायतः शिक्षणीया इति भावः ॥ १ ॥

इति द्वितीयोनुवाकः ॥

अथ प्रार्थनाप्रतिज्ञ ब्रह्मात्मज्ञानावताराय
भूमिकां चाह्योपासनां सहेति ।

सह नौ यशः सह नौ ब्रह्मवर्चसम् अथातः संहिताया उपनिषदं व्याख्यास्यामः पञ्चस्वधिकरणेषु अधिलोकमधिज्योतिषमधिविद्यमधिप्रजमध्यात्मम् ता महासꣳहिता इत्याक्षते अथाधिलोकम् पृथिवी पूर्वरूपम् द्यौरुत्तररूपम् आकाशः सन्धिः ॥ १ ॥

लोके यशो ब्राह्मणजातितेजश्च नौ गुरुशिष्ययोः सहास्तु इति प्राऽर्थयनीयं शिष्येण। अथाध्ययनाशिक्षानन्तरं न ध्यानं विना-

त्मग्रहणेऽलंमनोतः संहिताया वेदस्योपनिषदं लोकादिपञ्चविषयां बुद्धिमुपासनां ब्रूमः लोकाद्यधिकृत्य यानि पञ्चज्ञानानि ता महासंहितामहोपनिषदः इति वदन्ति अथ लोकमधिकृत्योपासनं यथा इषेत्त्वोर्जे इति मन्त्रेषकारानन्तरोयएकारः पूर्वरूपं पूर्ववर्णः सा पृथिवी उत्तररूपमुत्तरो वर्णो य एकारात्तकारः साद्यौः स्वर्गलोकः यत्र पूर्वोत्तररूपे सन्धीयेते स सन्धिर्मध्यदेशस्तयोर्वर्णयोः स आकाशो भुवर्लोकोन्तारिक्षम् ॥ १ ॥

येन च पूर्वोत्तरवर्णौ सन्धीयेते तत्सन्धानं तयोर्मध्ये द्वित्वसिद्धोन्यस्तकारः स वायुरिति भावनालोकसम्बन्ध्युपासनम् एवमग्रेपीदमेवोदाहरणं चतुर्षूपासनेषु ॥

**वायुः सन्धानम् इत्यधिलोकं अथाधिज्योतिषं अग्निःपूर्वरूपम् आदित्यउत्तररूपम् आपः**

सन्धिः वैद्युतः सन्धानम् इत्य-
धिज्योतिषम् अथाधिविद्यम्
आचार्यः पूर्वरूपम् ॥ २ ॥

अन्ते वास्युत्तररूपम् विद्या
सन्धिः प्रवचनꣳसंधानम् इ-
त्यधिविद्यम् अथाधिप्रजम् मा
ता पूर्वरूपम् पितोत्तररूपम् प्र-
जासन्धिः प्रजननꣳ सन्धान
म् इत्यधिप्रजम् ॥ ३ ॥

आदित्यश्चन्द्रमण्डलमित्येके। वैद्युतो विद्युतः ॥ २ ॥ शिष्योन्तेवासी। विद्याग्रन्थस्तदुच्चारणं प्रवचनम् ३ प्रजननमुत्पत्तिः पुत्रादिप्रजायाः ४ ॥ ३ ॥

अथाध्यात्मम् अधरा हनुः

पूर्वरूपम् उत्तरा हनुरुत्तररूपम् वाक्सन्धिः जिव्हासन्धानम् इत्यधात्मम् इतीमामहास॰हिताः य एवमेताःमहास॰हिता व्याख्याता वेद सन्धीयते प्रजया पशुभिः ब्रह्मवर्चसेनान्नाद्येन सुवर्ग्येण लोकेन ॥ ४ ॥

इमाः पञ्च । य एतावेदानुतिष्ठति स प्रजादिस्वर्गान्तफलैर्युज्यते ॥ ४ ॥

इति तृतीयोनुवाकः

अथ विना मेधांनवुध्येत ब्रह्मेति मेधाकरं जप्यमन्त्रमाह य इति ।

यश्छन्दसामृषभोविश्वरूपः छन्दोभ्योध्यमृतात्संवभू-

व समेन्द्रो मेधया स्पृणोतु अमृतस्य देवधारणो भूयासम् शरीरं मे विचर्षणम् जिह्वा मे मधुमत्तमा कर्णाभ्यां भूरिविश्रुवम् ब्रह्मणः कोशोसि मेधयापिहितः श्रुतं मे गोपाय। आवहन्तीवितन्वना ॥ १ ॥

य ओङ्कारो विश्वरूपः सर्वार्थाऽभिन्नाखिलशब्दाक्षरेष्वकारात्मना व्यापित्वात्सर्वरूपोतो वेदानामृषभः श्रेष्ठः तथा छन्दोभ्योधिगतं यदमृतं कैवल्यं तद्धेतोस्तदर्थं संभूतः स इन्द्रवाचकत्वादिन्द्र ईश्वरो मेधयातः मा मां योजयतु हे देव प्रधारणशक्तिबुद्ध्या मा मां योजयतु हे देव प्रणवश्रुतार्थस्य धर्ताहं स्यां प्रसादात्तव तथा शरीरं नीरोगं जिह्वातिप्रियसत्यवाग्भूयात्

भूरिब्रह्मात्मश्रवणं कुर्याम् अथ परब्रह्मणः कोशोसैरिवोपलब्धिस्थानमस्यनेकलौकिकबुध्या ऽऽच्छन्नस्त्वमतः श्रुतमात्मज्ञानं मे हृदि प्रकाशय। उत्तराश्रयेचान्त्यपदे ॥ १ ॥

यात्रामात्रश्रियमन्तरेण न मेधास्यादित्याशयकमुमुक्षुगृहस्थान्प्रतिहोमेन श्रीकरमन्त्रानाह कुर्वाणेति ।

कुर्वाणा ऽचीरमात्मनः । वासाꣳसि मम गावश्च अन्नपाने च सर्वदा ततो मे श्रियमावहलोमशांपशुभिः सह स्वाहा १ आमायन्तु ब्रह्मचारिणःस्वाहा २ विमायन्तु ब्रह्मचारिणःस्वाहा ३ प्रमायन्तु ब्रह्मचारिणः स्वाहा ४ दमायन्तु

**ब्रह्मचारिणः स्वाहा ५ शमा-
यन्तु ब्रह्मचारिणःस्वाहा ६॥२॥**

हे इन्द्र यतः श्रीःअचिरं कुर्वाणोविलम्बं न कुर्वती आत्मनो मम वस्त्रादि सर्वदा आवहन्ती प्रापयिष्यति सर्वतो वितन्वानावर्द्धयिष्यति च ततः नानाविधपशुभिर्विराजमानस्त्वाल्लोमशां बहुरोमयुतां श्रियं मे मह्यमावह सम्पादय इदं हविस्ते स्वाहा ददे । अथ श्रीविशेषाचार्यस्त्वायाह । आयन्तुमा मां पटनाय ब्रह्मचारिणः । मा वियन्तुवियुक्तान्मा भवन्तु । प्रमाः प्राप्नुवन्तु । दम् दान्तिम् । शम् शान्तिश्चाऽऽसर्वतो यन्तु यशस्करी विद्यास्त्विति भावः ॥ २ ॥

त देवाह यश इति ।

**यशोजनेऽसानि स्वाहा १
श्रेयान्वस्यसो सानि स्वाहा २**

तं त्वाभगप्रविशानि स्वाहा ३ समाभगप्रविश स्वाहा ४ तस्मिन्सहस्रशाखेनिभगाहं त्वयि मृजे स्वाहा ५ यथा ऽऽपः प्रवतायन्ति यथा मासा अहर्जरम् एवम् मां ब्रह्मचारिणः धातरायन्तु सर्वतः स्वाहा ६ प्रतिवेशोसि प्रमाभाहि प्रमापद्यस्व ॥ ३ ॥

यशोयशस्व्यहं सर्वजने ऽसानिस्याम तथा वस्यसोवसीयसोतिशयेन वसुमतोपि श्रेयान्। हे भगवन् तं ब्रह्मणःकोशं त्वामहं स त्वं मामभेदोस्त्वावयोरितिभावः सहस्रशाखेनेकरूपे त्वय्यहं पापानि हेभगनि-

मृजे नितरां शोधयामि । प्रवताप्रवणवता-
निम्नदेशेनाऽऽपः जरयत्यहोभिःसर्वमित्य-
हर्जरं संवत्सरं द्वादशमासा वा यथा य-
न्त्येवं मामायन्तु हे धातः सर्वतोदिग्भ्यो ब्र-
ह्मचारिणः अथोपस्थानमन्त्रार्थः गृहनिक-
टेविश्रामाय गृहं प्रतिप्रवेशः सोसित्वमो-
ङ्कारोब्रह्मार्थो तोमामां प्रपद्यस्वानुगृहाण
प्रभाहि प्रकाशय च यशसा सर्वत्र ॥ ३ ॥

इति चतुर्थोनुवाकः ॥ ४ ॥

अथ ब्रह्मज्ञानोपयोग्युपासनं विवक्षुः प्रणवः
सहस्रशाख इत्युक्तमिति प्रणवशाखासु-
व्याहृतिषु ब्रह्मतदङ्गदेवतोपासनमाह
पञ्चमेभूरिति ।

भूर्भुवः सुवरिति वा एता-
स्तिस्रो व्याहृतयः तासामुह-
स्मै तां चतुर्थीमाहाचमस्यः प्र

वेदयते महइति तद्ब्रह्म स आ-
त्मा अङ्गान्यन्या दैवताः भू-
रिति वा अयं लोकः भुवइत्य-
न्तरिक्षम् सुव इत्यसौ लोकः १।

वै स्मरणे । उ अप्यर्थे । ह किल । स्म-
अतिते । व्याहृतय एता इति स्मर्यते । ता-
सां सम्बन्धिनीं मह इत्येतां चतुर्थीमपि
किल व्याहृतिं महाचमसस्तुतः प्रवेदयतेस्म
ज्ञातवान् । तन्महस्तु ब्रह्मापरिच्छिन्नमा-
त्मा च मुख्योन्यास्तिस्रस्त्वङ्गानि । व्याहृ-
तीनां स्वस्वाधिष्ठातृदेवता ऽभेदायाक्तो भू
रितीत्यादावितिरनुकरणार्थः । सुवः स्वः ।
असौ स्वर्गः ॥ १ ॥

मह इत्यादित्यः आदित्येन
वा सर्वेलोकामहीयन्ते भूरिति

वा अग्निः भुव इति वायुः सुव
रित्यादित्यः मह इति चन्द्रमाः
चन्द्रमसावावसर्वाणिज्योतीꣳ
षि महीयन्ते भूरिति वा ऋचः
भुव इति सामानि सुवरिति
यजूꣳषि ॥ २ ॥ मह इति ब्रह्म
ब्रह्मणावावसर्वे वेदा महीयन्ते
भूरिति व प्राणः भुव इत्यपानः
सुवरितिव्यानः मह इत्यन्नम्
अन्नेन वावसर्वे प्राणा मही-
यन्ते ता वा एताश्चतस्रश्चतु-
र्धा चतस्रश्चतस्रो व्याहृतयः
ता यो वेद स वेद ब्रह्म सर्वेस्मै
देवावालिमावहन्ति ॥ ३ ॥

महीयन्ते सूर्येण प्रकाश्यन्ते चन्द्रेण स्वरूपामृतोपभोगदानेन नक्षत्रादि दैवतानि वर्द्धन्ते ब्रह्मणोङ्कारेण तु व्याप्यन्ते अन्नेनेन्द्रियदेहवायवः शक्ताः क्रियन्ते। अयमर्थःब्रह्मात्मरूपारविचन्द्रान्नप्रणवैश्चाऽभिन्नामहर्व्याहृतिरहम् तथा यं लोकोग्निर्ऋग्वेदः प्राणवायुरेवं चतुर्भिः प्रकारैः प्रत्येकं चतस्रश्चतूरूपाया भूराद्यास्तिस्रो व्याहृतयस्तामदीयान्यङ्गानीति य उपासनेन वेद स ब्रह्म वेद ब्रह्मज्ञानार्हो भवति अथ देवास्तस्मै सर्वभोग प्रापयन्ति प्रजा इवेति। स्वाराज्यमवान्तरफलं च लभत इतिभावः ॥२।३॥

इति पञ्चमोनुवाकः ॥ ५ ॥

अथोक्तोपास्य महर्ब्रह्मोपलब्धिस्थानमार्गाद्याह स इति ।

स य एषोन्तर्हृदय आकाशः तस्मिन्नयं पुरुषो मनोमयः अमृतो हिरण्मयः अन्तरेण तालु

के य एषस्तन इवावलम्बते से-
न्द्रयोनिः यत्रासौ केशान्तो
विवर्त्तते व्यपोह्य शीषकपाले
भूरित्यग्नौ प्रतितिष्ठति भुवइति
वायौ ॥ १ ॥ सुवरित्यादित्ये
मह इति ब्रह्मणि आप्नोति स्वा-
राज्यम् आप्नोति मनसस्पतिम्
वाक्पतिश्चक्षुष्पतिःश्रोत्रपति-
र्विज्ञानपतिः एतत्ततो भवति
आकाशशरीरं ब्रह्म सत्यात्म-
प्राणारामं मन आनन्दम् शा-
न्तिसमृद्धममृतम् इतिप्राची-
नयोग्योपास्व ॥ २ ॥

अथ बाह्यआन्तरश्च पञ्चकत्रयात्मकोऽखिल-
लोकः परस्परमभिन्नोऽहमेव वेत्युपासनं
स्वाराज्यफलकमाह पृथिवीति ।

पृथिव्यन्तरिक्षं द्यौर्दिशोऽवा-
न्तरदिशः १ अग्निर्वायुरादि-
त्यश्चन्द्रमा नक्षत्राणि २ आ-
प ओषधयो वनस्पतय आकाश
आत्मा ३ इत्यधिभूतम् अ-
थाध्यात्मम् प्राणोऽपानो व्या-
न उदानः समानः १ चक्षुःश्रो-
त्रं मनो वाक् त्वक् २ चर्म मा॰
स॰स्नावास्थिमज्जा ३ एत-
दधिविधाय ऋषिरवोचत् पा-
ङ्क्तं वा इद॰ सर्वम् पाङ्क्तेनैव

पाङ्क्तꣳ स्पृणोतीति ॥ १ ॥

आत्मशब्दो देहार्थः । स्नावा नाडी । मज्जास्थ्यन्तर्गतघृताकारधातुः । एतदध्यात्माधिभूतात्मकं जगदधिकृत्यावोचद्वेदः । पञ्चाक्षरश्छन्दःपङ्क्तिः पङ्क्तेरिदं संबन्धि पञ्चसंख्याबन्मयत्वेन पाङ्क्तं वै सर्वमिदं जगत् तस्मात् पाङ्क्ते न पाङ्क्तसंबन्धयुपासनेन पाङ्क्ते बिराडभिमानि हिरण्यगर्भं प्राप्नोति ॥ १ ॥

इति सप्तमोऽनुवाकः ॥ ७ ॥

अथ सर्वात्मत्वेन व्यापित्वेन च ब्रह्मतयोङ्कारोपासनमाहोमिति ।

ओमिति ब्रह्म ओमितीदं सर्वम् ओमित्येतदनुकृतिर्ह स्म वा अप्यो श्रावयेत्याश्रावयन्ति ओमिति सामानि गाय-

न्ति ओ॰शोमिति शस्त्राणि श॰सन्ति ओमित्यध्वर्युः प्रतिगरं प्रतिगृणाति ओमिति ब्रह्मा प्रसौति ओमित्यग्निहोत्रमनुजानाति ओमितिब्राह्मणः प्रवक्ष्यन्नाह ब्रह्मोपाप्नवानीति ब्रह्मैवोपाप्नोति ॥ १ ॥

अर्थाभिन्नवाग्व्यापित्वादोमिदं जगद्यतः यतश्चैतत्कुर्वित्यन्वनन्तरमङ्गीकारे ओमितिकृति ह स्मैव प्रसिद्धा अपि किंच प्रणवपूर्वकाध्वर्युवाक्येनार्त्विजः श्रावयन्ति मन्त्रं देवान् तथोङ्कारपूर्वकमेव गायन्ति। गीतिरहिता ऋचः शंसन्ति। प्रतिगरंयजुर्विशेषं पठन्ति। प्रसौति प्रेरयति। अनुजानाति जुहुधीति। तथा ब्रह्मवेदमुपाप्नवानि बुद्धिस्थं करवाणीत्यध्यय-

नार्थे मन्त्रं वक्ष्यन्नोमित्याह वदति तेन चो-
पाप्नोत्येव वेदम् । तस्मादोङ्कारो ब्रह्मेत्युपा-
सीतेति शेषः ॥ १ ॥

इत्यष्टमोऽनुवाकः ॥ ८ ॥

अथोपासनाशक्तः कर्मासक्तोमुमुक्षुरकामः
कर्मैव कुर्यादित्याहर्तञ्चेति ॥

ऋतञ्च स्वाध्यायप्रवचने च सत्यञ्च स्वाध्यायप्रवचने च तपश्च स्वाध्यायप्रवचने च दमश्च स्वाध्यायप्रवचने च शमश्च स्वाध्यायप्रवचने च अग्नयश्च स्वाध्यायप्रवचने च अग्निहोत्रं च स्वाध्याय प्रवचने च अतिथयश्च स्वाध्यायप्रवचने च मानुषञ्च स्वा-

ध्यायप्रवचने च प्रजा च स्वाध्यायप्रवचने च प्रजनश्च स्वाध्यायप्रवचने च प्रजातिश्च स्वाध्यायप्रवचने च सत्यमिति सत्यवचाराथीतरः तप इति तपो नित्यः पौरुशिष्टिः स्वाध्यायप्रवचेन एवेति नाकोमौद्गल्यः तद्धि तपस्तद्धि तपः ॥ १ ॥

मनसा यथार्थानुसन्धानमृतम् वाचा यथार्थभाषणं सत्यम्। स्वाध्यायो वेदपाठः। प्रवचनम् धर्मार्थं स्मरणार्थं वा तदध्यापनं। तपश्चान्द्रायणादि। दमो दशेन्द्रियाणाम्। शमो मनसः। अग्न्याधानम्। होमकर्म। अतिथिपूजा। मानुषं लौकिकं विवाहादौ बंधु-

पूजादि । प्रजापुत्राद्या तदर्थं यत्नः । प्रजनो-भार्यागमनमृतौ । प्रजातिःपुत्रादेर्विवाहादि-पौत्राद्यर्थम् । एतानि कुर्यात् स्वाध्यायप्रवचने त्वहरहः कार्ये इत्यनयोः तत् तत्कर्मणा समु-च्चयार्थकस्य चस्य चावृत्तयः अथ सत्यमेव श्रेय इतिरथीतरसुतः सत्यवचा मन्यते । पुरुशिष्टिसुतस्तपो नित्यस्तु तप इति । ह्रिय-तस्तत्स्वाध्यायप्रवचनमेव परमं तपस्तस्मा-त्ते एव श्रेयसी इति मुग्दलापत्यनाकः ॥ १ ॥

इति नवमोऽनुवाकः ॥ ९ ॥

अथानधीतवेदस्यापि स्वाध्यायरूपब्रह्मयज्ञ-फलायाहरहःपठनीयमाहाहमिति ॥

अहं वृक्षस्य रेरिवा कीर्त्तिः पृष्ठं गिरेरिव ऊर्ध्वपवित्रो वा-जिनीव स्वमृतमस्मि द्रविण९ सवर्चसम् सुमेधा अमृतोक्षि-

तः इति त्रिशङ्कोर्वेदानुवचनम् ॥ १ ॥

अहमेव जगतः प्रेरको नाशको वेत्यद्रिशृङ्गमिवोन्नतं मे यशः । वाजिनि सूर्ये यथासुष्ठ्वमृतं मुक्तिर्मधु वामधुविद्योपासकानां तथोर्ध्वं सर्वाधिकं यथास्यात्तथापवित्रः कैवल्यं गतोस्मि । सवर्चसमखण्डचिदाकारंज्ञानमेव मे धनम् । अमृतेन चिद्रूपेणोक्षितो व्याप्तो यतोतोहं सुमेधाः । वेदानुज्ञानप्राप्त्यनन्तरं त्रिशङ्कोरिदं सर्वं वचनं वामदेवस्येव ॥ १ ॥

इति दशमोऽनुवाकः ॥ १० ॥

अथात्मज्ञानोपयोगिबुद्ध्यादिसंस्कारकं कर्म प्रागात्मज्ञानात्करणीयमाह वेदमिति—

वेदमनूच्याचार्योन्तेवासिनमनुशास्ति । सत्यं वद धर्मं चर

स्वाध्यायान्मा प्रमदः आचा-
र्याय प्रियं धनमाहृत्य प्रजा-
तन्तुं माव्यवच्छेत्सीः सत्यान्न
प्रमदितव्यम् धर्मान्न प्रमदित-
व्यम् कुशलान्न प्रमदितव्यम्
भूत्यै न प्रमदितव्यम् स्वा-
ध्यायप्रवचनाभ्यां न प्रमदि-
तव्यम् ॥ १ ॥

वेदमध्याप्य शिष्यानुशासनं कुर्यात् । मा प्रमदो सावधानो माभूर्मा त्यजकुर्विति यावत् । गुरवे धनमिष्टं दत्त्वा समावृत्त्य वंशर्द्धिहानिं मा कुरु पुत्रार्थं यतस्व । कुशलात्स्वरक्षार्थात्कर्मणः । भूत्यै ऐश्वर्यहेतुकर्मणः । कथमपि न त्याज्यमित्यावृत्तिः ॥ १ ॥

देवपितृकार्याभ्यां न प्रम-

दितव्यम् । मातृदेवो भव पितृदेवो भव आचार्यदेवो भव अतिथिदेवो भव यान्यनवद्यानि कर्माणितानि सेवितव्यानि नो इतराणियान्यस्माकꣳसुचरितानितानि त्वयोपास्यानि॥२॥

मातादेवो यस्य देववन्निषेवणीया मात्रादयः । अनवद्यान्यनिषिद्धानि निषिद्धानीतराणि ॥ २ ॥

नो इतराणि ये के चास्मच्छ्रेयांसो ब्राह्मणास्तेषां त्वयाऽऽसनेन प्रश्वसितव्यम् श्रद्धया देयम् अश्रद्धयाऽदेयम् श्रिया

**देयम् ह्रिया देयम् भिया देयम् संविदा देयम् अथ यदि ते कर्म विचिकित्सा वा वृत्तविचिकित्सा वा स्यात् ॥ ३ ॥**

इतराण्यशुभान्यचार्यकृतान्यपि न कार्याणि । अथास्मत्तः स्वतः श्रेष्ठा ये ब्राह्मणा स्तेषामासनदानादिना सत्कारः कार्यः दानं च श्रद्धयास्तिक्यधिया ना श्रद्धया । श्रियामुखकान्त्या नतन्म्लान्या अथवा धनानुसारेण न वित्तशाठ्येन । नास्य योग्यतापर्याप्तमिदमिति ह्रिया नम्रतया वा । धर्महानिभिया अधार्ष्ट्येन वा । संविदाऽवधानतयानान्यगतचित्ततया । अथ कदाचित्तव श्रौतस्मार्त कर्मस्वाचारे वा संशयो भवेत् ॥ ३ ॥

**ये तत्र ब्राह्मणाः संमर्शिनः**

युक्ता आयुक्ताः अलूक्षा धर्म-
कामाः स्युः यथा ते तत्र वर्तेरन्
तथा तत्रवर्तेथाः अथाभ्यख्या-
तेषु ये तत्र ब्राह्मणाः सम्मर्शिनः
युक्ता आयुक्ता अलूक्षा धर्म
कामाः स्युः यथा ते तेषु वर्तेरन्
तथा तेषु वर्तेथाः एष आदेशः
एष उपदेशः एषा वेदोपनिषत्
एतदनुशासनम् एवमुपासित-
व्यम् एवमुचैतदुपास्यम् ॥४॥

तदा ये तद्देशे विवेकिनो धर्मयुक्तास्तत्प-
राश्चारूक्षा धर्ममात्रकामा भोगेर्थे चाना-
सक्तास्ते तत्र कर्मस्वाचारे वा यथा तथा त्व-
मपि अथायं पातकीत्येव मुक्तेष्वपि त इवैव

व्यवहार । एष श्रौतो विधिः स्मार्तश्चोपदेशो वेदानामुपनिषद्रहस्यं सार ईश्वराज्ञा चेत्येवमेव कर्तव्यमित्यावृत्तिः ॥ ४ ॥

॥ इत्येकादशः ॥

अथ पाठान्ते च पठनीय इति शिक्षार्थमन्ते शिक्षाध्यायस्योक्तमेव किञ्चिल्लक्षण्येन शान्तिमन्त्रमाह शं न इति—

शं नो मित्रः शंवरुणः शं नो भवत्वर्यमा शं न इन्द्रो बृहस्पतिः शं नोविष्णुरुरुक्रमः नमो ब्रह्मणे नमस्ते वायोत्वमेव प्रत्यक्षं ब्रह्मासि त्वामेव प्रत्यक्षं ब्रह्मावादिषम ऋतमवादिषम् सत्यमवादिषम् तन्मामावीत् तद्वक्तारमावीत् आ-

वीन्माम् आवीद्वक्तारम् ॐ शान्तिःशान्तिःशान्तिः ॥ १ ॥

अवादिषमुक्तवानहम् आवीदपालयत् शान्तिपाठफलमवाप्तं मयेति भावः ॥ १ ॥

इति तैत्तिरीयोपनिषत्प्रसादे द्वादशोनुवाकः प्रथमवल्ली च ॥

अथ शिक्षितस्य मुमुक्षोः श्रवणीयवल्ल्योराद्यन्तयोः शान्तिपाठेनाहरहरादावन्ते च पाठस्य शान्तिमन्त्रस्यपठनीयतां सूचयन् ब्रह्मविद्यादरार्थमुक्तानुक्त शान्तिमन्त्रौ प्रथममाह शमित्यादिना—

शं नो मित्रः शं वरुणः शं नो भवत्वर्यमा शं न इन्द्रो बृहस्पतिः शं नो विष्णुरुरुक्रमः नमो ब्रह्मणे नमस्ते वायो त्वमेव प्रत्यक्षं ब्रह्मासि त्वामेव प्रत्यक्षं

ब्रह्म वदिष्यामि ऋतं वदिष्यामि सत्यं वदिष्यामि तन्मामवतु तद्वक्तारमवतु अवतु माम् अवतुवक्तारम् ओं शान्तिःशान्तिः शान्तिः ॥ १ ॥ सह नाववतु सह नौ भुनक्तु सह वीर्यं करवावहै तेजस्विनावधीतमस्तु मा विद्विषावहै ओं शान्तिः शान्तिः शान्तिः ॥ २ ॥

नौ आवाम् गुरुं शिष्यं च माम् सह परमात्मा रक्षतु भुनक्तु भोजयतु प्रापयतु भोगम् । वीर्यं विद्यार्थयत्नं सह मिलित्वाध्ययनाध्यापनादिश्रमम् । तेजस्वि सफलम् नौ आवयोः । केनचिद्विद्वेषं न करवावहै । त्रितापानां शान्तिरस्तु ॥ २ ॥

अथ परमार्थस्वरूपनिरूपकवल्लीमारभमाणः कैवल्यमुक्तेः केवलज्ञानमेव साधनमिति सूचयन् ब्राह्मणेन फलं मन्त्रेण तु फलं केवलवस्तुलक्षणं चाह ब्रह्मेति—

**ब्रह्मविदाप्नोति परम् । तदेषाभ्युक्ता सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चितेति ॥ १ ॥**

परं परमार्थस्वरूपं वेद्यमाप्नोत्यास्ति तदेषा उक्तब्राह्मणार्थवाचिकेयमृगुक्ता वेदे । मिथ्या च जडं च परिमितं च यन्न भवति तद्ब्रह्माखण्डपरिपूर्णं परमे ज्ञानाङ्गतयोत्कृष्टे व्योमन्हृदयाकाशे गुहायां बुद्धौ साक्षितयास्थितं यो वेद स विपश्चिता सर्वज्ञेशात्मना ब्रह्मस्वरूपेण सर्वकामान्सहैकदैवाप्नोतिसर्वात्मत्वात् सर्वात्माभवतीति भावः ॥ १ ॥

सत्यज्ञानानन्तस्वरूपलक्षणोक्त्यनन्तरं ज-
गत्कारणत्वरूपतटस्थलक्षणं सूचयति
तस्मादिति—

तस्माद्वा एतस्मादात्मन आ-
काशः संभूतः आकाशाद्वायुः
वायोरग्निः अग्नेरापः अद्भ्यः
पृथिवी पृथिव्या ओषधयः ओ-
षधीभ्योन्नम् अन्नात्पुरुषः ॥२॥

वै भिन्नक्रमः तस्माद्व्यवहितब्राह्मणोक्ता-
देतस्मादनन्तरमन्त्रोक्तादात्मना ब्रह्मणः स-
काशादेवेत्यर्थः ओषधयस्ते वृक्षा येष्वन्नं
जायते । अन्नाद्रेतो द्वारा पुरुष इति प्रधान-
त्वान्निर्देशः ॥ २ ॥

अथात्मस्वरूपविवेकाय पुरुषेवयवान्दुर्विज्ञेया-
ऽन्तःस्थतया कोशत्वेनान्यत्र व्यवहृतान्
विवक्षुराह स वा इति—

स वा एष पुरुषोन्नरसमयः तस्येदमेव शिरः अयं दक्षिणः पक्षः अयमुत्तरः पक्षः अयमात्मा इदं पुच्छं प्रतिष्ठा तदप्येष श्लोको भवति ॥ ३ ॥

स उक्तोन्नसारशुक्रमय एष पुरुषो वै प्रसिद्धो लोके तस्य चेदं प्रत्यक्षं शिर एव शिरः भुजौ पक्षौ । कण्ठात्कटिपर्यन्तोयं मध्यभाग आत्मावयवीव । कट्यधः पादयुगं पुच्छं पुच्छाकारत्वात् प्रतिष्ठाऽऽधारश्चाखिलोर्ध्वगस्य । सर्वाधार आत्मेति विवक्षया चेद्गुक्तिः । तत्तत्रान्नमयत्वे मन्त्रोप्यस्ति ॥३॥

इति तैत्तिरीयोपनिषत्प्रसादे ब्रह्मवल्ल्यां प्रथमःखण्डः ॥०॥

मन्त्रमाहान्नादिति—

अन्नाद्वै प्रजाः प्रजायन्ते याः

काश्च पृथिवीं श्रिताः अथो ऽन्ने नैवजीवन्ति अथैनदपि यन्त्यन्ततः अन्नं हि भूतानां ज्येष्ठम् तस्मात्सर्वौषधमुच्यते सर्वं वै तेऽन्नमाप्नुवन्ति येऽन्नं ब्रह्मोपासते अन्नं हि भूतानां ज्येष्ठम् तस्मात्सर्वौषधमुच्यते अन्नाद्भूतानि जायन्ते जातान्यन्नेन वर्धन्ते अद्यते ऽत्ति च भूतानि तस्मादन्नं तदुच्यते इति॥

श्रितागताः। अन्ते एनदन्नं प्रविशन्ति तत्र लीयन्ते । कुतो हि यतोन्नं ज्येष्ठं प्रथमजं सर्वेषां क्षुद्रोगस्यौषधं च। अथ हि यतोन्नं ज्येष्ठं कारणमोषधं च तस्माद्येन्नं ब्र-

ह्मभावयन्ति ते सर्वान्नं लभन्ते अथ यतो भूतान्युत्पाद्य संवर्ध्यान्तेऽत्ति भूतैश्चाद्यते स्वयं तस्मादन्नमुच्यते । अत्र मन्त्रे १४ पादाः ॥ १ ॥

कोशान्तरमाह तस्मादिति—

तस्माद्वा एतस्मादन्नरसमयादन्योन्तर आत्मा प्राणमयः तेनैष पूर्णः सवा एष पुरुषविध एव तस्य पुरुष विधताम् अन्वयं पुरुषविधः तस्य प्राण एव शिरः व्यानो दक्षिणः पक्षः अपानउत्तरः पक्षः आकाश आत्मा पृथिवी पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥ २ ॥

तस्मादुक्तादन्योऽभ्यन्तरः प्राणमयो वायुभूतो गौण आत्मा तेन चान्तर्गते नैषोऽन्नमयो घट इव जलेन पूर्णः । सः प्राणमयोऽपि पुरुषाकार एव परन्तु न स्वतः किन्त्वन्नमयस्य तदाकारतामनुपश्चात् । ताम्रादिद्रवो यथान्तर्गत्वा मूषाकारो भवति न पूर्वम् । आकाशोदेहमध्यभागगताकाशस्थः समान आत्मा मध्यभागएवात्मत्वस्यलोके प्रसिद्धेः । पृथिवी तत्स्थ ऊर्ध्वगाम्युदानः क्षत्र दण्डवद्देहोपष्ठम्भकत्वात्प्रतिष्ठा ॥ २ ॥

इति द्वितीयः ॥०॥

प्राणविषये श्लोकमाह प्राणमिति—

**प्राणं देवा अनुप्राणन्ति मनुष्याः पशवश्च ये प्राणो हि भूतानामायुः तस्मात्सर्वायुषमुच्यते सर्वमेवत आयुर्यन्ति ये**

प्राणं ब्रह्मोपासते प्राणो हि भूतानामायुः तस्मात्सर्वायुषमुच्यत इति तस्यैष एव शारीर आत्मा यः पूर्वस्य ॥ १ ॥

प्राणवायुमनुदेवा इन्द्रियाणि चेष्ठन्तेन्ये च । हि यत आयुर्जीव न हेतुस्तस्मात्सर्वायुः यत एवं तस्माद्ब्रह्म तयोपासकाः सर्वं शतसंवत्सरात्मकं पूर्णम् । अथ शरीरे प्रतीतश्चिदात्मा तु योन्नमयस्य स एव तस्य प्राणमयस्य ॥ १ ॥

तृतीयकोशमाह तस्मादिति—

तस्माद्वा एतस्मात्प्राणमयात् अन्योऽन्तर आत्मा मनोमयः तेनैषपूर्णः स वा एष पुरुषविध एव तस्य पुरुषविधताम् अन्वयं

पुरुषविधः तस्य यजुरेव शिरः ऋग्दक्षिणः पक्षः सामोत्तरः पक्षः आदेश आत्मा अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा तदप्येष श्लोको भवति ॥ २ ॥

एष प्राणमयः । स एष मनोमयः । तस्य प्राणमयस्य । अयं मनोमयः । आदेशो ब्राह्मणग्रन्थः । अथर्वणाङ्गिरसा च दृष्टा मन्त्रा ब्राह्मणावाथर्वाङ्गिरसः । एवं च यजुरादिविषयकमनोवृत्तयो मनसश्शिर आद्यवयवाः ॥ २ ॥

इति तृतीयोनुवाकः ॥ ३ ॥

मनोविषये मनोविषयवागात्मकयजुरादिविषये च श्लोकमाह यत इति ।

यतो वाचो निवर्तंते अप्राप्य मनसा सह । आनन्दम्ब्रह्म-

णो विद्वान्नबिभेति कदाचनेति तस्यैष एव शारीर आत्मा यः पूर्वस्य ॥ १ ॥

वाचो वाग्रूपा वेदाः विचारितवेदजन्यं ब्रह्माकारं मनश्च यतोयं निर्गुणत्वादज्ञेयत्वाच्च साक्षाद् घटादिमि वा गृहीत्वा ऽप्रकाश्य च निवर्तन्ते न निरूपयन्ति न प्रकाशयन्तीत्यर्थः ईदृशं ब्रह्मस्वरूपमानन्दं योवेत्त्युपास्ते भावयति स संसारी न भवति ब्रह्मैव भवतीति भावः । तस्य मनोमयस्य ॥ १ ॥

चतुर्थकोशमाह तस्मादिति ।

तस्माद्वा एतस्मान् मनोमयात् अन्योन्तर आत्मा विज्ञानमयः तेनैष पूर्णः स वा एषपुरुषविधएव तस्यपुरुषवि-

धताम् अन्वयं पुरुषविधः तस्य श्रद्धैव शिरः ऋतं दक्षिणः पक्षः सत्यमुत्तरः पक्षः योग आत्मा महः पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥ २ ॥

एष मनोमयः । स एष विज्ञानमयः । तस्य मनोमयस्य । अयं विज्ञानमयः । विज्ञानं धीर्निश्चयात्मिका निश्चये सति धीवृत्तिः श्रद्धा प्रथमं जायत इति सा शिरस्तस्य विज्ञानमयस्य। ऋतं मानसस्य निश्चयो-वाह्यार्थस्य च सत्यं संशयादि राहित्येन धियस्तत्परता योगः । महोधीगतश्चिदाभासः ॥ २ ॥

इति चतुर्थोनुवाकः ॥ ४ ॥

विज्ञानमये श्लोकमाह विज्ञानमिति—

विज्ञानं यज्ञं तनुते कर्मा-

णि तनुतेऽपि च । विज्ञानं देवास्सर्वे ब्रह्म ज्येष्ठमुपासते ॥ विज्ञानं ब्रह्मचेद्वेद तस्माच्चेन्न प्रमाद्यति । शरीरे पाप्मनो हित्वा सर्वान्कामान्समश्नुत ॥ इति तस्यैष एव शारीर आत्मा यः पूर्वस्य ॥ १ ॥

विज्ञानं विना न यज्ञादि भवतीत्यखिलकारणत्वेन ज्येष्ठत्वाद्ब्रह्मतया विज्ञानं जानन्ति देवास्तस्मादन्योऽप्येवं यो भावयति भावनाच्च यदि न च्युतो भवति तर्ह्यपापोऽखिलभोगान्सम्यग् भुङ्क्ते । तस्य विज्ञानमयस्य ॥ १ ॥

कोशान्तरमाह तस्मादिति—

तस्माद्वा एतस्माद्विज्ञान-

मयात् अन्योन्तर आत्माऽऽनं-दमयः तेनैष पूर्णः स वा एष पुरुषविध एव तस्य पुरुषवि-धताम् अन्वयं पुरुषविधः त-स्य प्रियमेव शिरः मोदो द-क्षिणः पक्षः प्रमोद उत्तरः पक्षः आनंद आत्मा ब्रह्म पुच्छं प्र-तिष्ठा । तदप्येष श्लोको भ-वति ॥ २ ॥

एष विज्ञानमयः। स एष आनन्दमयः। तस्य विज्ञानमयस्य। अयमानन्दमयः। इ-ष्टेन्तःकरणस्याद्योभावः प्रियस्तत्र दृष्टे द्वि-तीयोमोदो लब्धेप्रमोदः अविवक्षितप्रिय-त्वादि विशेषस्स एव सामान्यत आनन्दः।

ब्रह्मान्तःकरणे तद्वृत्तिषु च स्फुरतः प्रतिबिम्बप्रकाशस्याश्रयो बिम्बचैतन्यम् । अथात्रान्नमयो देहस्तदन्तःसंचारी वायुश्च प्राणः प्रसिद्धः तयोश्चैवं सतोः पूर्वं संकल्पः पदार्थेततोध्यवसायस्ततो यत्नेन लाभादानन्द इत्ययं सर्वान्तरः कोशश्चापरिज्ञातत्वाद्ब्रह्मचित्त्वेनेति बोध्यम् ॥ २ ॥

॥ इति पञ्चमः ॥

पुरुषे चैवमखिलाधारत्वेनानन्दे ब्रह्मण्यात्मनि विवेचिते श्लोकमाहासन्निति—

असन्नेव स भवति असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुरिति । तस्यैष एव शारीर आत्मा यः पूर्वस्य ॥ १ ॥

अध्यस्ताखिलानात्मनो विनाशे विनाशा-

नर्ह्यधिष्ठानब्रह्मणोप्य ऽभावं यो भावयत्य-
नात्मन्यात्मज्ञो तज्ज्ञस्स एवासद्भवत्यन्यथा
तु ब्रह्मात्मतया सदा वर्तमानमेवैनमाहु-
र्वेदाः ॥ १ ॥

अथ स्वरूपतटस्थलक्षणाभ्यामुपक्षिप्तं ब्रह्म पञ्चकोशविवेचनेनात्मतयोक्त्वा तत्रासन्नेवेति मन्त्रोऽस्ति नास्तीति पक्षद्वयोक्तेः प्राप्तसंशयस्य प्रश्नमवतारयत्यथेति—

**अथातोऽनुप्रश्नाः उताऽविद्वानमुं लोकं प्रेत्यकश्चन गच्छती३ आहो विद्वानमुं लोकं प्रेत्य कश्चित्समश्नुता३ उ ॥२॥**

यतोस्ति नास्तीति मतद्वयमतस्तदनन्तरं प्रश्ना जायन्ते । उत शब्दोप्यर्थे । विचारार्थौ च प्लुतौ । कश्चन कोप्यऽविद्वानपि प्रेत्य देहंविहायामुमुक्तब्रह्माख्यं लोकं प्रकाशं गच्छति प्राप्नोति अहो अथवा क-

श्चिद्विरलो विद्वान् उ एवेति प्रश्नौ बहु वचनन्तु ब्रह्मास्ति न वेति संशयरूपप्रश्नाभिप्रायेण । अयं भावः । यद्यसद्ब्रह्म तर्हि तज्ज्ञेनापि नाप्येत नाप्यत एव खपुष्पं केनापि यतः यदि चास्ति तर्ह्यज्ञेनाप्याप्यं सर्वात्मत्वात्सर्वत्वाच्चेति ॥ २ ॥

सदपि सुवर्णं वलयाद्यात्मकमनभिज्ञेन सुवर्णार्थिनापि न गृह्यते, गृह्यत एव चाभिज्ञेनातस्सर्वकारणत्वेन सर्वात्मकं ब्रह्मास्त्येवेति सूचयञ्छ्रुतिः कारणतां वर्णयति स इति—

सोऽकामयत बहु स्यां प्रजायेयेति स तपो तप्यत स तपस्तप्त्वा इदं सर्वमसृजत यदिदं किंच तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवत् निरुक्तं चानिरुक्तं च

निलयनं चानिलयनं च विज्ञा-
नं चाविज्ञानं च सत्यं चानृतं च
सत्यमभवत् यदिदं किंच त-
त्सत्यमित्याचक्षते । तदप्येष
श्लोको भवति ॥ ३ ॥

प्रजायेयोत्पद्येयाहमित्थं च बहुभवेय-
मित्यैच्छत्स तटस्थलक्षणे प्रकृतोयं आत्मा ।
तत इत्थमिदमिदं च स्यामिति तपोज्ञान-
मालोचनं कृत्वा यदिदं भाति तत्सर्वं सृष्ट्वा
भूत्वा तत्सृष्टं प्राविशत्तत्र प्रविष्ट इवाप्रती-
यत । अथ सन्मूर्तं पृथ्व्यप्तेजोरूपमसदमूर्त्तं
वाय्वाकाशं च निर्देश्यमनिर्देश्यं चाश्रया-
नाश्रयरूपं च चेतनाचेतनं च सापेक्षस-
त्यमनृतं च यत्किंचित्तद्यस्मात्सत्यं परमार्थ-
सत्यमात्मस्वरूपमेवा भवत्तस्मात्तदखिलं स-

त्यं ब्रह्मात्मस्वरूपमेवेति वदन्ति तत्तस्मिन्नुक्तेऽर्थे मन्त्रोऽप्यस्ति ॥ ३ ॥

इति षष्ठः ॥

मन्त्रमाहासदिति—

**असद्वा इदमग्र आसीत् ततो वै सदजायत तदात्मानं स्वयमकुरुत तस्मात्तत्सुकृतमुच्यत इति ॥ १ ॥**

इदं जगदग्रे पूर्वमुत्पत्तेरसदव्यक्तं ब्रह्म स्वरूपमेवासीत् ततोऽव्यक्ताद्ब्रह्मणस्सदिदं जगदुदपद्यत । तदानीमन्योपादानाभावादात्मानमेव जगदाकारमकरोत्तद्ब्रह्म यतस्तस्मात्तद्ब्रह्म सुकृतनामसुकृतं च शोभनं कार्यम् शोभनत्वं च कार्याकारत्वेऽप्यविकृतकारणात्मत्वम् ॥ १ ॥

अथाऽऽनन्दंब्रह्मणो विद्वानिति श्रुतेर्ब्रह्मानन्दयोः प्राप्तं भेदं वारयाति यद्वै इति ।

यद्वैतत्सुकृतं रसो वै सः रसं ह्येवायं लब्ध्वानन्दीभवति को ह्येवान्यात्कः प्राण्यात् यदेष आकाश आनन्दो न स्यात् एष ह्येवानन्दयाति यदा ह्येवैष एतस्मिन्नदृश्यऽनात्म्ये ऽनिरुक्ते ऽनिलयने ऽभयं प्रतिष्ठां विन्दते अथ सोऽभयं गतो भवति यदाह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति तत्त्वेव

भयं विदुषोऽमन्वानस्य तद
प्येषश्लोको भवति ॥ २ ॥

यत्तदुक्तं सुकृताख्यं ब्रह्मसरसो निखिल सारस्सत्यपदार्थ आनन्द इति यावत् यतो विनाशि पुत्राद्यनुभवकाले दुःखमेवलोकस्य तथाच रसत्वमेव लब्ध्वायमात्मा सदानन्दो भवति रसत्वं चानन्दत्वमात्मन-आविद्यकैस्सदप्यसदिव यतो यद्यद्येष आत्माकाशो ऽखिल व्याप्यानन्दो न भवेत्तर्हि को जीवेत्प्राण्यात्तत्तद् व्यापारं वा कुर्यात् स्वार्थानन्दार्थमेव जीवनं व्यापारावेति भावः एवञ्चैष एव पूर्णत्वाद्विषयद्वारानन्दयतिसर्वानानन्दस्वरूपेणाभिव्यज्यत इत्यर्थः । तस्मादकार्ये निराकारे वागगोचरे सर्वाधिष्ठानत्वेन निराधार एतस्मिन्नसेयदैष आत्मा निर्भयमभेदो यथा स्यात्तथा स्थितिं लभते तर्ह्यविनाशी भवति यावत्त्वरमुदल्पमप्य-

न्तरं भेदं भावयति तावन्नश्यत्येव प्रति जन्म किं चाभेदममन्वानस्य भेदं विदुषो जन्मादिभयप्रदमीश्वरादि तद्ब्रह्मैव भवति । तदस्मिन्नर्थे मन्त्रोऽप्यस्ति ॥ २ ॥

॥ इति सप्तमः ॥

मन्त्रमाह भीषेति—

**भीषास्माद्वातः पवते भीषोदेति सूर्यः । भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चम इति ॥ १ ॥**

भृत्या इव विना विश्रामं नियतकालमस्मात्परमात्मनो भयेन वातादयोगमनदहनपालनमारणादि कुर्वन्त्यगतब्रह्मभावाः ॥ १ ॥

ननु ब्रह्मैकरसमानन्दस्तु भिद्यत इति नतयोर भेद इत्याशङ्क्य भेद औपाधिकोत एवाखिलानित्योपाधिवासनाशून्यो निष्का-

मो वेदान्तविन्नित्यनिरतिशय सामान्या-
नन्दो दृष्ट इत्याशयकमाह सैषेत्यादि—

सैषानन्दस्य मीमांसा भवति । युवास्यात्साधु युवाध्यापक आशिष्ठो दृढिष्ठो बलिष्ठः तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात् स एको मानुष आनन्दः । ते ये शतं मानुषा आनन्दाः स एको मनुष्यगन्धर्वाणामानन्दः श्रोत्रियस्य चाकामहतस्य । ते ये शतं मनुष्यगन्धर्वाणामानन्दाः स एको देवगन्धर्वाणा-

मानंदः श्रोत्रियस्य चाकामह-
तस्य। ते ये शतं देवगंधर्वाणा
मानंदाः स एकः पितृणा चि-
रलोकलोकानामानन्दः श्रो-
त्रियस्य चाकामहतस्य। ते ये
शतं पितृणां चिरलोकलोका-
नामानन्दाः स एक आजान-
जानां देवानामानंदः श्रोत्रिय-
स्या चाकामहतस्य। ते ये श-
तमाजानजानां देवानामान-
न्दाः स एकः कर्मदेवानां दे-
वानामानन्दः ये कर्मणा देवा-
नपियन्ति श्रोत्रियस्य चाका-

महतस्य । ते ये शतं कर्मदेवा-
नां देवानामानन्दाः स एको
देवानामानन्दः श्रोत्रियस्य चा-
कामहतस्य। ते ये शतं देवाना-
मानन्दाः स एक इन्द्रस्यानंदः
श्रोत्रियस्य चाकामहतस्य । ते
येशतमिन्द्रस्यानन्दाःस एको
वृहस्पतेरानंदः श्रोत्रियस्यचा-
कामहतस्य।ते ये शतं वृहस्प-
तेरानन्दाःस एकः प्रजापतेरा-
नन्दः श्रोत्रियस्य चाकामहत-
स्य । ते ये शतं प्रजापतेरान-
न्दाः स एको ब्रह्मण आनन्दः

## श्रोत्रियस्य चाकामहतस्य ॥ २ ॥

एष आनन्दस्य विचारोस्ति यदि युवासाधु-
स्सुन्दरस्सुशीलोऽध्यापकस्सर्वविद्यः तथाति-
शयेनाऽऽश्वित्याशिष्ठो प्रतिहताज्ञतया-
तिक्षिप्रकारी दृढस्सर्वेन्द्रियपाटवो देहवली-
धनपूर्णाखिलभूपतिः कोपि स्यात्तर्हि तत्रा-
भिव्यक्त आनन्दो मानुषउच्यते स चैकः अ-
यमत्र लोके निरतिशयोयं आनन्दः स एव
सर्वान्यापेक्षयाहीन इत्येकत्वमुक्तम् । नित्य-
निरतिशयसामान्यानन्देन्तर्भावतौल्येप्यत्र-
पर्याये श्रोत्रियस्य चाकामहतस्येति च नो-
क्तम् अथ मानुष्याद्ये गन्धर्वत्वं गताः । ये वा
देवभेदाजात्या गन्धर्वाः । ये च पितरो ये-
षां चिरस्थायि लोको लोकः स्थानम् । ये वा
ऽऽजाने देवलोके जाताः स्मार्तकर्मणा देवाः ।
तथा ये केवलवैदिककर्मणा देवत्वं यन्ति
देवाद्योतनात्मकाश्च । ये च स्वतो देवास्त्रय-
स्त्रिंशतिर्वसुरुद्रादित्याः । यश्चेन्द्रो द्वात्रिंशः

यश्चैषां गुरुः। यो वा त्रयस्त्रिंशः प्रजापति-
र्विराट्। यो वा व्यष्टिर्ब्रह्मा। एषु समनुष्यै-
कादशपर्यायोक्तेषूत्तरोत्तरस्य पूर्वपूर्वापेक्षया
शतगुण आनन्दः हिरण्यगर्भानन्दानन्तगुण-
श्च विधातृत्वेपिविरक्तस्यात्मारामस्येति स-
मुदायार्थः॥ २॥

अथैवं सर्वप्रत्यक्षानन्दाभिन्न विद्वत्प्रत्यक्षके-
वलानन्दाभिन्नं ब्रह्मास्तीति निरूपणस्यफल-
माह स यश्चायमिति—

स यश्चायं पुरुषे यश्चासा-
वादित्ये स एकः स य एवं वि-
त् अस्माल्लोकात्प्रेत्य एतमन्न-
मयमात्मानमुपसंक्रामति ए-
तं प्राणमयमात्मानमुपसंक्रा-
मति एतंमनोमयमात्मानमु-
पसंक्रामति एतं विज्ञानमय-

मात्मानमुपसंक्रामति एतमा-
नन्दमयमात्मानमुपसंक्रामति।
तदप्येष श्लोको भवति ॥ ३ ॥

य एवमुक्तप्रकारेणादित्यपुरुषयो र्विद्व-
दविदुषोरानन्दमेकं वेत्ति सोन्यद्दृष्ट्यामरण-
काले प्रेत्योत्क्रमणं कृत्वापि वस्तुतो नोत्क्राम-
ति किन्त्वत्रैव परमानन्दब्रह्मचिद्रूपेण पञ्च-
कोशोपलक्षितसर्वात्मा भवतीत्यर्थः ॥ ३ ॥

इत्यष्टमः ॥

श्लोकमाह यत इति ।

यतो वाचो निवर्त्तन्ते अ-
प्राप्य मनसा सह आनन्दं ब्र-
ह्मणो विद्वान्न बिभेति कुत-
श्चनेति ॥ १ ॥

चतुर्थखण्डोयं कृतार्थः । ब्रह्मविद्ब्रह्मैव भ-

वतीत्यानन्दरूपब्रह्मातिरिक्ताभावाद्भयाभा-
वइति भावः ॥ १ ॥

अथ भयाभावाद्भयमूलकानुतापाभावमपि
भयाभावहेतुहेतुकमाहैतमिति ।

एतꣳ ह वावनतपति किम-
हꣳसाधुनाकरवम् किमहं पा-
पमकरवमिति स य एवं विद्वा-
नेते आत्मानꣳ स्पृणुते । उभे
ह्येवैष एते आत्मानꣳस्पृणुते य
एवं वेद। इत्युपनिषत् ॥ २ ॥
सह नाववत्विति शान्तिः ॥३॥

य एवमुक्तरीत्याऽऽत्मनः सर्वात्मकत्वं
वेत्ति नैतं तपत्युद्वेजयत्यन्तकालेनुतापः कु-
तो न मया सुकृतं कृतं कृतं च दुष्कृतमि-
त्ययम् यतः स एते सुकृतदुष्कृते अप्या-

त्मानमेवस्पृणुते जानाति । उक्तार्थोक्तिस्स-
माप्तये । इत्युक्ताद्वैतात्मज्ञानमेवोपनिषद्ब्र-
ह्मज्ञानम् ॥ २ ॥

इति तैत्तिरीयोपनिषत्प्रसादे ब्रह्मवल्लीतनू-
नवमखण्डश्च ॥

---

अथ ब्रह्मवल्ल्युक्तब्रह्मज्ञानस्य साधनं तप उ-
पासनञ्च विवक्षुराख्यायिकां शान्तिमन्त्रपूर्विकां
श्रद्धाविश्वासयोरुत्पादिकामुपादत्ते भृगुरिति ।
सहनाववत्विति शान्तिः ॥ ३ ॥

भृगुर्वै वारुणिः वरुणं पितर-
मुपससार अधीहि भगवो ब्रह्मे-
ति । तस्मा एतत्प्रोवाच अन्नं
प्राणं चक्षुः श्रोत्रं मनो वाच-
मिति तꣳहोवाच यतो वा इ-
मानि भूतानि जायन्ते येन

जातानि जीवन्ति यत्प्रयन्त्य-
भिसंविशन्ति तद्विजिज्ञासस्व
तद्ब्रह्मेति । स तपोऽतप्यत स
तपस्तप्त्वा ॥ १ ॥

समीपं गत्वा पप्रच्छ भगवन्नुपदिश ब्र-
ह्म । वाक्यसमाप्तावत्रेति शब्दः । पिता च
चन्द्रबोधनेच्छया समीपवर्त्ति शाखामिवा-
न्नादिशब्देन देहादि प्रोवाचाथ लक्षणं च
स्थिरचरजीवाय त उत्पन्नास्सन्ति प्रयन्ति
म्रियमाणाश्च यत्सम्यग्विशन्ति तादात्म्यं
यान्ति तद्ब्रह्म तद्विचारयेति । विचारश्चदे-
हादावेवेतिभावः । भृगुस्तपश्चित्तसमाधानं
कृत्वा ॥ १ ॥

इति तैत्तिरीयोपनिषत्प्रसादे भृगुवल्ल्यां
प्रथमखण्डः ॥ १ ॥

अन्नंब्रह्मेति व्यजानात् अ-

न्नाद्ध्येव खल्विमानि भूतानि जायन्ते अन्नेन जातानि जीवंति अन्नं प्रयंत्यभिसंविशंतीति तद्विज्ञाय पुनरेव वरुणं पितरमुपससार अधीहि भगवोब्रह्मेति । तं हो वाच तपसा ब्रह्मविजिज्ञासस्व तपो ब्रह्मेति । स तपोऽतप्यत स तपस्तप्त्वा ॥१॥

हि यतोद्यतेत्तिवान्नं देहस्तत एव जीव जन्मादि दृश्यते तोन्नं ब्रह्मेति ज्ञात्वाप्यनिश्चयात्पुनः पप्रच्छ । चित्तैकाग्र्यमेव ब्रह्मब्रह्मातिसाधनमिति तथैव पुनर्विचारयेत्युक्तो जातकिंचित्सूक्ष्मधीर्विचार्य ॥ १ ॥

इति द्वितीयः ॥

प्राणो ब्रह्मेति व्यजानात् प्रा-
णाद्ध्येव खल्विमानि भूतानि
जायंते प्राणेन जातानि जीवन्ति
प्राणं प्रयंत्यभिसंविशन्तीति
तद्विज्ञाय पुनरेव वरुणं पितर-
मुपससार अधीहि भगवो ब्रह्मे-
ति तं होवाच तपसा ब्रह्मविजि-
ज्ञासस्व तपो ब्रह्मेति । स तपो
ऽतप्यत स तपस्तप्त्वा ॥ १ ॥

हि यतः प्राणसत्तयैव प्राणिनां जन्मास्थि-
तिश्चोच्यते मृतिस्त्वन्यथातः प्राणं ब्रह्मेति
ज्ञात्वापीत्यादि पूर्ववत् ॥ १ ॥

इति तृतीयः ॥

मनो ब्रह्मेति व्यजानात् म-

नसो ह्येव खल्विमानि भूतानि जायंते मनसा जातानि जीवन्ति मनः प्रयंत्यभिसंविशन्तीति तद्विज्ञाय पुनरेव वरुणं पितरमुपससार अधीहि भगवो ब्रह्मेति । तं होवाच तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्मेति । स तपो तप्यत स तपस्तप्त्वा ॥१॥

हि यतो मनो राज्यतोऽपि जन्माद्यनुभूयते वासनया च स्वप्ने तथेदमपि मनोमयमेवातो मनो ब्रह्मेतीत्यादिपूर्ववत् ॥ १ ॥

इति चतुर्थः ॥

विज्ञानं ब्रह्मेति व्यजानात् विज्ञानाद्ध्येव खल्विमानि भू-

तानि जायन्ते विज्ञानेन जाता-
नि जीवन्ति विज्ञानं प्रयंत्यभि
संविशन्तीति तद्विज्ञाय पुनरेव
वरुणं पितरमुपससार अधीहि
भगवोब्रह्मेति। तंहोवाच तपसा
ब्रह्मविजिज्ञासस्व तपो ब्रह्मेति।
स तपोतपप्यत स तपस्तप्त्वा १

हि यतोखिलमानसादि जन्मस्थितिलया
विज्ञानेनैव प्रकाश्यन्ते ऽतोविज्ञानं ब्रह्मेति
ज्ञात्वापि पुनः पित्राज्ञप्तश्चित्तसमाधानं कृ-
त्वा ॥ १ ॥ इति पञ्चमः ॥

आनंदोब्रह्मेति व्यजानात्
आनंदाद्ध्येव खल्विमानि भू-
तानि जायन्ते आनंदेन जा-

तानि जीवन्ति आनंदं प्रयन्त्य भिसंविशन्ति सैषा भार्गवी वा- रुणीविद्या परमे व्योमन्प्रति- ष्ठिता। य एवं वेद प्रतितिष्ठति अन्नवानन्नादो भवति महान् भवति प्रजया पशुभिर्ब्रह्मवर्च- सेन महान्कीर्त्या ॥ १ ॥

एवं तपोविचारयोरभ्यासाज्जातातिसूक्ष्म- धीर्भृगुर्वैषयिकमेव विविधत्वं न वस्तुतः ज्ञानंज्ञानमित्यखण्डैकत्वप्रतीतेः केवलं तु ज्ञानमानन्दस्वरूपमेव समाधितूष्णीभावा- भ्यामखिलसंमतमित्यानन्दोब्रह्माखिलाधि- ष्ठानमितिव्यजानात्स्वयम् । सा ख्यातैषो- क्ताविद्या संविदे वंचिदाकाशे पर्यवसन्ना ता- मेवमुक्तरीत्या यो जानाति सोपि तत्रैव पर्य-

वस्यति । नैतावदेव । वह्वन्नयुग्वह्वन्नभुक् पुत्रादिहस्त्यादिब्रह्मतेजोभिर्यशसा ख्यातश्च भवति ॥ १ ॥ इति षष्ठः ॥

अथैवं ब्रह्मज्ञव्रतोक्तिपूर्वकं विचारासमर्थमन्दप्रज्ञजिज्ञासुभ्य उपासनप्रनप्रकरणंप्रारभते प्राणोवैइत्यादिना—

अन्नं न विन्द्यात् तद्व्रतम् । प्राणो वा अन्नम् शरीरमन्नादम् प्राणे शरीरं प्रतिष्ठितम् शरीरे-प्राणःप्रतिष्ठितःतदेतदन्नमन्ने प्रतिष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठितम् वेद प्रतितिष्ठति अन्नवानन्नादो भवति महान्भवति प्रजया पशुभिर्ब्रह्मवर्चसेन महान्कीर्त्या ॥ १ ॥

अन्नमयदेहेवगतं ब्रह्मातोऽन्नं न निन्द्यात् यथाप्राप्तमद्यादितिभावः तदनिन्दिनं व्रतंनियम उक्तरीत्या ब्रह्म विदुष । अथ शरीरमध्ये प्रतिष्ठितत्वात्प्राणः प्राणनिमित्तकस्थितिमत्वाच्छरीरं चान्नम् तथान्योन्याधीनीकरणादन्नादत्वं च तयोरिति यो वेद भावयति सततं स ब्रह्मतयाऽचलप्रतिष्ठामन्नवानित्यादिपूर्वोक्तफलानि च लभते ॥ १ ॥

इति सप्तमः ॥

अथपूर्वोपासकव्रतोक्तिपूर्वकमुपासनान्तरमाहापो वै इति—

**अन्नं न परिचक्षीत तद्व्रतम् । आपो वा अन्नम् ज्योतिरन्नादम् अप्सु ज्योतिः प्रतिष्ठितम् ज्योतिष्यापः प्रति-**

ष्ठिताः तदेतदन्नमन्ने प्रति-
ष्ठितम् । स य एतदन्नमन्ने
प्रतिष्ठितं वेद प्रतितिष्ठति अन्न
वानन्नादो भवति महान्भ-
वति प्रजया पशुभिर्ब्रह्मवर्चसे
न महान्कीर्त्या ॥ १ ॥

यतोन्नमुपास्ते ऽतः कदन्नमपि नात्स्या-
मीति न त्यजेत् । अथान्योन्येनान्योन्यवि-
नाशस्यदर्शनादन्नत्वमन्नादत्वं चाग्निजलयोः
अर्थस्तु सप्तमखण्डवत् ॥ १ ॥

इत्यष्टमः ॥

पूर्वोपासकव्रतोक्तिपूर्वकमुपासनान्तरमाह-
पृथिवीति—

अन्नं बहुकुर्वीत तद्व्रतम् ।
पृथिवी वा अन्नम् आकाशो

न्नादः पृथिव्यामाकाशः प्रतिष्ठितः आकाशे पृथिवी प्रतिष्ठिता तदेतदन्नमन्नेप्रतिष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठितं वेदप्रातितिष्ठति अन्नवानन्नादो भवति महान्भवति प्रजया पशुभिर्ब्रह्मवर्चसेन महान्कीर्त्या ॥ १ ॥

यथापः साक्षादग्निरद्भिस्तद्वदन्नं वहु कुर्यादुपासकः कथंचित् । अन्तर्नीयते यत्तदन्नं यस्यान्तर्नीयते तदन्नादमित्यन्नान्नादत्वे पृथिव्याकाशयोः । अर्थस्तु नापूर्वः ॥१॥

इति नवमः ॥

अथ मुमुक्षुगृह्यवश्यानुष्ठेयान्नदानं तदैहिकफलं च पूर्वोपासकव्रतोक्तिपूर्वकमाह नेति—

न कंचन वसतौ प्रत्याचक्षीत तद्व्रतम् । तस्माद्यया कया च विधयावह्वन्नं प्राप्नुयात् अराध्यस्मा अन्नमित्याचक्षते । एतद्वै मुखतोन्नꣳराद्धम् मुखतोस्मा अन्नꣳराध्यते एतद्वै मध्यतोन्नं राद्धम् मध्यतोस्मा अन्नं राध्यते एतद्वा अन्ततोन्नं राद्धम् अन्ततोस्मा अन्नꣳराध्यते । य एवं वेद ॥ १ ॥

पृथिव्याकाशौ सर्वेषां वासंदत्त इत्युपासकोपि निशिनिवासाया ऽऽगतं न कमपि निराकुर्यात् । वासितेभ्यो ऽन्नमवश्यं देयं यस्मात्तस्मात्केनापि प्रकारेण विहितेनान्नं

संगृह्णीयात् वदन्ति च शिष्टाः अराधिसंसिद्धमस्त्यन्नमस्मै समागतायेति न तु नास्तीतीति भावः अथैतदन्नदानं च यदि मुखत उत्तमरीत्यादरेण प्रथमे च वयसि सिद्धं तर्ह्युत्तममेवान्नं प्रथम एव च वयसि तस्मैदात्रेसिद्धत्याप्नोति दातान्नमिति भावः एवं मध्यमनिकृष्टपक्षयोर्मध्येन्ते वयसि च ज्ञेयम् य एवं दानमाहात्म्यं जानाति सोप्येतत्फलं लभते ॥ १ ॥

अथानन्दब्रह्मोपासनान्याह क्षेम इति—

क्षेम इति वाचि । योगक्षेम इति प्राणापानयोः । कर्मेति हस्तयोः । गतिरिति पादयोः । विमुक्तिरिति पायौ५ इति मानुषीः समाज्ञाः । अथ दैवीः । तृप्तिरिति वृष्टौ । बलमिति विद्यु-

ति । यश इति पशुषु । ज्योति-
रिति नक्षत्रेषु । प्रजातिरमृत-
मानन्द इत्युपस्थे। सर्वमित्या-
काशे । तत्प्रतिष्ठेत्युपासीत ७
प्रतिष्ठावान्भवति ॥ २ ॥

क्षेमाद्या आनन्दहेतवो वाग्व्यापारादिसा-
ध्या अपि न चैतन्यमन्तरेण सिध्यन्तीति
ब्रह्मैव क्षेमाद्यात्मनावागादिषु प्रतिष्ठितं स-
र्वात्मनाचाकाशे आकाशं च ब्रह्मणीति त-
द्ब्रह्मैव प्रतिष्ठाधिष्ठानं सर्वस्येति द्वादशोपा-
सनानां फलं प्रतिष्ठा लौकिकी ब्रह्मरूपता-
चान्तःकरणशुद्धिद्वारेति समुदायाशयः । प्रा-
प्तस्य रक्षाक्षेमोप्राप्तप्राप्तिर्योगः । विमुक्तिर्म-
लस्य । पञ्चात्रोपासना मनुष्यसम्बन्धिन्यः
प्रजातिः पुत्रोत्पत्तिस्सा चामृतममरकर्तृके-
ति मर्त्यव्यावृत्तिरानन्दस्तु मैथुनजः । अ-

स्या दैवीषूल्लेखो महत्त्वात् ॥ २ ॥

अथोपासनानुगुणफलकोपासनान्याह तदिति

तन्मह इत्युपासीत महान् भवति । तन्मनइत्युपासीत मानवान् भवति । तन्नम इत्युपासीत नम्यन्तेस्मै कामाः । तद्ब्रह्मेत्युपासीत ब्रह्मवान् भवति । तद्ब्रह्मणः परिमर इत्युपासीत पर्येणं म्रियन्ते द्विषन्तः सपत्नाः परियेऽप्रिया भ्रातृव्याः ॥ ३ ॥

तद्ब्रह्म । महो महत् । नम्यन्ते भिमुखाभवन्ति दिव्यभोगाः । ब्रह्मवान्वेदवान् । तच्चिद्रूपं ब्रह्म वेदाख्यंब्रह्मणः परिमरआकाशो-

लयस्थानमिति यावत् परितः सर्वतो म्रियन्ते लीयन्ते शब्दा अत्रेति व्युत्पत्तेः । एन मुपासकं द्विषन्तो भ्रातृव्य। अद्विषन्तश्च ये परिसर्वतस्ते सर्वे सपत्नाः शत्रवो विनश्यंति ३

अथोपासनायामप्यानन्दैकत्वमेव भावनीय मिति ब्रह्मवल्ल्यष्टमखण्डोक्तेनेषद्विकृतेन स यश्चायमित्यादिना फलमाह—

स यश्चायं पुरुषे यश्चा सावादित्ये स एकः स य एवं वित् अस्माल्लोकात्प्रेत्य एतमन्नमय मात्मानमुपसंक्रम्य एतं प्राणमयमात्मानमुपसंक्रम्य एतं मनोमयमात्मानमुपसंक्रम्य एतं विज्ञानमयमात्मानमुपसंक्रम्य एतमानन्दमयमात्मानमुप

संक्रम्य इमान् लोकान् कामान्
नीकामरूप्यनुसञ्चरन्नेतत्साम
गायन्नास्ते ॥ ४ ॥

आनन्दात्मैकत्वज्ञानी अस्माल्लोकाज्जगतः प्रेत्यासम्बद्धं स्वस्वरूपं साक्षात्कृत्य कोशापि स्वाभेदेन निश्चित्य यथेष्टान्नरूपवानखिललोकान्विचरन् समं ब्रह्म तत्परसामवेदं गायति ॥ ४ ॥

गेयमाह हा३व्विति—

हा३वुहा३वुहा३वुअहमन्नमहमन्नमहमन्नम् । अहमन्नादो३हमन्नादो३हमन्नादः अहं श्लोककृदहं श्लोककृदहं श्लोककृत् अहमस्मि प्रथमजा ऋता३स्य

पूर्वं देवेभ्यो अमृतस्यना३ भायि यो मा ददाति स इ देव मा ३वाः अहमन्नमन्नमदन्तमा३ द्मि३ अहं विश्वं भुवनमभ्यभवाम् सुवर्नज्योतीः ॥ ५ ॥

अहो उ अत्राऽकारप्रगृह्यत्वयोरभावेऽवा देशेप्लुतिराश्चर्यार्थिका । साऽऽवृत्तिश्चाश्चर्यातिशयाय । अन्नमन्नादः कीर्त्तिकर्त्ता चाह मेवेति महदाश्चर्यमिति जीवन्मुक्तकादाचित्कोक्तिः । ऋतस्य परब्रह्मणः प्रथमजो ज्येष्ठसुतो धाताह मतो देवेभ्यः पूर्वं चास्मि यतोऽमृतस्य मुक्तेर्नाभिमिवाचरामि सर्वेषां मुक्तेराश्रयमिव भवामि परब्रह्मास्मीति यावत्। अथान्नं मां यो ददात्यन्नार्थिभ्यः स इदित्थं दानशीलः एवं दानप्रकारेणाऽवोऽवति माम्। अदत्त्वान्नमदन्तं त्वन्नात्मकोप्यह

माग्निनाशयामि। यतोखिलं भुवनमहमभ्यभ-
वमभिभवामि सुवस्सूर्यो न इवार्थे सूर्य इव
ज्योतिःप्रकाशमान ईश्वरइति यावत् ॥५॥
अथैतदुपासनाफलमात्मज्ञानिन्यतिदिशतियइति

**य एवं वेद ॥ ६ ॥**

य एवं भृगुवदात्मज्ञः सोप्येतत्फलंलभ-
ते ॥ ६ ॥

उपसंहरतीतीति—

**इत्युपनिषत् ॥ ७ ॥**

इति भृगुवल्ल्युक्तं यत्तदुपनिषद्ब्रह्मज्ञान
शब्दवाच्यम् ॥७॥ सहनाववतु शांतिः ३ ॥
दययानन्तरामस्य मृदुग्रन्थोयमुम्भितः ।
श्रीस्वामिभास्करानन्दैस्तैत्तिरीयाख्यवेदके ॥१॥
कृशामज्ञीः क्व भाष्येण क्व वेदान्ताब्धिमन्थनम् ।
तथाप्यघटितं किं वा गुरुदेवदयालवे ॥ २ ॥

इति तैत्तिरीयोपनिषत्प्रसादे भृगुवल्ली
तद्दशमखण्डश्च ॥